# सज्जनानां मैत्री

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवत् दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥

—भर्तृहरेः नीतिशतकतः

क्षीरजलयोः असदृशी मैत्री। गृहिणी यदा क्षीरे जलं योजयति तदा क्षीरं चिन्तयति- 'स्नेहितः प्राप्तः' इति। अतः आत्मनः सर्वस्वं-सर्वगुणान् रुचिवर्णादीन्- ददाति। द्वितीयक्षणे क्षीरजलयोः पृथक्तता एव न तिष्ठति। यदा गृहिणी क्षीरम् चुल्लेः उपरि स्थापयति तदा क्षीरम् उत्तपति। एतत् मित्रस्य कष्टं दृष्ट्वा जलं स्वयम् अग्नेः आहारः भवति। (बाष्परूपतां प्राप्नोति) एतत् दृष्ट्वा क्षीरं तूष्णीं तिष्ठति किम्? तदपि अग्नौ पतितुम् उद्गच्छति। तदा गृहिणी किञ्चित् जलं स्थापयति। इदानीं क्षीरं शान्तं- यतः मित्रं जलं प्राप्नं किल?

क्षीरस्य उष्णीकरणं प्रतिगृहं प्रतिदिनं प्रचलति। सामान्यः एषः विषयः केन वा न दृष्टः? सर्वैः अपि दृष्टः एव। किन्तु दृष्टेन केन पूर्वोक्ता मैत्री लक्षिता?

क्रान्तदर्शी खलु कविः? अचेतनानि चेतनवत् व्यवहारयति। नीरसं जगत् निजरसभरात् सारयति। नमस्तस्मै कवीन्द्राय!

# Will you be there



**Puri. The temple of Lord Jagannath. Garland around her neck and vermillion on her forehead, the 9-year-old bride of the Lord pledges her faith to Him amidst all the pomp and ceremony of a true Oriya wedding. No longer an ordinary girl, she is now the earthly consort of Puri Jagannath ...**

**The fascinating story of the dasis of Puri. Watch it come alive in the pages of the Heritage.**

**The Heritage: magazine or mini library?**

The Heritage is an amazing storehouse of information: every issue is a unique compilation of facts that answer some of the most intriguing questions.

How were black ants used in ancient surgery?

Why do the Charans of Rajasthan worship rats?

What light does Ramanujam's 'lost notebook' throw on Number Theory?

And more ...

Fascinating articles month after month, on every aspect of Indian culture. Stories about the land, its history, its people, their customs, their arts and crafts ...

Travelogues that capture the spirit of little known places and exotic lands.

From the publishers of Chandamama



THE HERITAGE

It's worth preserving. Every issue of it.



# for the Devadasi wedding?



Updates and flashbacks on science and technology.

Lucid articles that interpret Indian mythology and philosophy in terms the modern reader can understand.

All of which makes the Heritage a fascinating way to catch up with the past and the present.

**A fiction bonanza in every issue**

Every issue of the Heritage carries at least three short stories and a novelette, written by some of the most well known contemporary fiction writers. Ruskin Bond. Edith Pargeter. Manoj Das. And the best of Indian language fiction, translated to keep the flavour of the original.

**A galaxy of well-known authors**

The Heritage carries articles by some of the most famous names in contemporary Indian literature and journalism. Regular contributors include Mulk Raj Anand. M N Das. M P Pandit. K A Abbas. And an expert panel of academicians who are authorities in their fields.



**Start your Heritage library today**

The Heritage now offers readers a unique money-back subscription scheme. Fill in the coupon below and enclose your annual subscription with it. If you are not satisfied with the first issue, please return it to us with your comments within ten days, and we will refund your money in full.

Yes, I want to start my Heritage collection right away. I am enclosing a DD/MO for Rs 72/- towards annual subscription.

Name : ..........

Address : ..........

..........

Mail your subscription to : **Dolton Agencies, 188 N.S.K. Salai, Vadapalani, Madras 600 026.**

CMP-1825



# चन्दमामा

जनवरी – १९८६

*

अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-५०

वार्षिकं ग्राहकशुल्कम् रू. ३०-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

गजः - अत्युपयुक्तः प्राणी । असदृशं सामर्थ्यम्, शान्तः स्वभावः, मनोहरः आकारः । दशजनानां कार्यम् एकः एव निरायासेन करोति। किन्तु गजस्य विशेषोपयोगं स एव स्वीकर्तुं शक्नोति यः गजं पोषयितुं समर्थः अस्ति। निर्धनाय कवये गजः दत्तः चेत् किं वा प्रयोजनम् ? स्वयं दुर्बलः सः कविः गजं कथं वा पोषयेत् ? गजः भाराय कल्पते तस्मै ।

'संस्कृतं समग्रे देशे अस्ति येन एतत् राष्ट्रिय-एकतासम्पादने समर्थं साधनं भवितुम् अर्हति' इत्येतत् सत्यम् एव। संस्कृतस्य भूषणायते एतत् । किन्तु संस्कृतं सर्वत्र अस्तीति कारणतः एव वयम् इदानीं कष्टम् अनुभवामः । भारते उत्तरे किं प्रचलति इति दक्षिणे न जानन्ति । दक्षिणे किं प्रचलति इति पश्चिमे न जानन्ति । एवं संस्कृतभाषावलये कुत्र किं प्रचलति इति वयम् एव न जानीमः । विशालः देशः, विरलः सम्पर्कः ।

संस्कृतस्य वैशाल्यं तदा एव गुणायते, यदा च वयं प्रबलाः भविष्यामः । अतः विविधप्रचारोपायैः सङ्घटनादितन्त्रैः च अस्माभिः अचिरात् एव स्वसामर्थ्यं वर्धनीयम् । अन्यथा बालस्य हस्ते स्थितः खड्गः इव संस्कृतस्य वैशाल्यम् अपि भारायते एव ।

सम्पुटः–२ जनवरी–८५ सञ्चिका–१०

प्रतिकृतिमूल्यम्– रू.२·५० वार्षिकं ग्राहकशुल्कम्– रू.३०/-






रसप्रश्नाः

# कः शुद्धः शब्दः ?

(अधस्तनवाक्येषु रिक्तस्थाने एकः शब्दः सविभक्तिकः पूरणीयः अस्ति । तदर्थं वाक्यस्य अधः शब्दाः दत्ताः सन्ति । तेषु शुद्धं शब्दरूपम् अन्विष्य वाक्ये पूरयन्तु)

१. जनैः क्षीरेण देवस्य........(holy sprinkling) क्रियते ।
(अभिशेकः, अविषेकः, अभिषेकः, अभिषेखः)

२. तण्डुलैः........(Beaten rice) निर्मान्ति ।
(पृथुकान्, प्रथुकान्, पृथुखान्, पृतुकान्)

३. समितौ दश........(Trustees) सन्ति ।
विश्वस्थाः, विश्वस्ताः, विस्वस्ताः, विष्वस्थाः

४. अहम्........(Teacher Fem) अस्मि ।
(अद्यापकी, अध्यापिका, अद्यापिका, अध्यापकी)

५. रामः अयोध्यायां........(Birth) प्राप्तवान् ।
(जन्मः, जन्मं, जनुमं, जन्म)

६. 'सुन्दरं पुष्पम्' इत्यत्र सुन्दरपदं........(Adjective)
(विशेषणं, विषेषणं, विषेशणं, विशेशणं)

७. सर्वैः........(According to one's ability) समाजसेवा करणीया ।
(यथाशक्तिः, यथाशक्तिं, यथाशक्ति, यथाशक्ती)

८. यः शास्त्रं जानाति सः........(Scholar)
(शास्त्रिः, शास्त्रिन्, षास्त्री, शास्त्री)

९. ........(In Assemballly) आयव्ययचर्चा भविष्यति ।
(अधिवेशने, अधिवेषने, अदिवेशने, अदिवेषने)

१०. यदि विषयं जानाति तर्हि उत्तरकथने किं........? (Difficulty)
(काठिण्यं, काटिन्यं, काटिण्यं, काठिन्यं)

उत्तराणि— १) ३ २) १ ३) २ ४) २ ५) ४ ६) १ ७) ३ ८) ४ ९) १ १०) ४

## रसवार्ता:



### आंग्लभाषाज्ञः चिम्पाजी

अट्लाण्टाप्रदेशे स्थितः चतुर्वर्षीयः चिम्पाजी कांश्चन आंग्लशब्दान् ज्ञातुं शक्नोति। आंग्लभाषया पृष्टानां प्रश्नानां उत्तरं मुखतः यद्यपि न वदति, तथापि विविधैः सङ्केतैः भावं स्पष्टं प्रकाशयति।

### अतिविशालं नक्षत्रमण्डलम्

अमेरिकादेशस्य 'अरिजोना किट्पीक् नेषनल् अब्सर्वेटरी' संस्थायाः विज्ञानिनः एतावत्पर्यन्तम् अज्ञातं नूतनं नक्षत्र-मण्डलं अन्विष्टवन्तः सन्ति। 'अतिविशालम् एतत् नक्षत्र-मण्डलं बिलियन् (एकलक्षकोटि) कान्तिसंवत्सराणां दूरे अस्ति' इति जाक्बर्न्स् नामकः खगोलविज्ञानी अभिप्रैति।





### कथनसमर्थं धनम्

केनडादेशे नूतनं नाणकं निर्मितम् अस्ति यत् हस्ते गृह्णन्तः अन्धाः तदीयं मौल्यं ज्ञातुं शक्नुवन्ति। यदि एषः प्रयोगः जनप्रियः भवेत् तर्हि सर्वत्र व्यवहारे आगच्छेत्। एतत् धनम् इदानीं आंग्लभाषया फ्रेञ्चभाषया च कथयति।

## भवन्तः जानन्ति वा?

१) भारतीयसङ्गीतं नाट्यं च विदेशेषु प्रसारयितुं प्रयतितवन्तौ प्रमुखौ सहोदरौ कौ?
२) पन्नालाल्घोष् कस्य वाद्यस्य वादने प्रवीणः?
३) षहनाय्वाद्यस्य वादने प्रसिद्धः विद्वान् कः?
४) बेगम् अख्तर् कीदृशैः गीतैः सुप्रसिद्धा?
५) १९६६ तमे वर्षे ऐक्यराज्यसमितेः महासभायां आरम्भे कया भारतीयमहिलया गायनं कृतम्?

(उत्तराणि ६५ तमे पृष्ठे)

# राजा इन्द्रद्युम्नः

इन्द्रद्युम्नः स्वमरणानन्तरं बहुकालं यावत् इन्द्रलोके वसन् आसीत्। एकदा देवाः तं "भूलोके भवतः कीर्तिः लुप्ता अस्ति। अतः इतः परं भवान् स्वर्गे स्थातुं न अर्हति" इति उक्त्वा भूलोकं प्रति प्रेषितवन्तः।

इन्द्रद्युम्नः अरण्येषु सञ्चरन् सम्मुखे आगतं मार्कण्डेयमुनिं पृष्टवान्- "भवान् मां जानाति वा ?" इति।

"नैव, भवान् कः इति न जानामि किल ?" इति उक्तवान् मुनिः।

"भवतः अपेक्षया ज्येष्ठः कोऽपि अस्ति वा अत्र ?" इति पृष्टवान् राजा।

"ममापेक्षया ज्येष्ठः प्राकारकर्णः नाम उलूकः अस्ति। तं पृच्छामः, आगच्छतु मया सह" इति उक्तवान् मुनिः।

उलूकः महाराजं दृष्ट्वा - "भवन्तम् अहं न जानामि। मम अपेक्षया ज्येष्ठः नालीजङ्घः नाम बकः अस्ति। तं पृच्छामः" इति उक्तवान्।

विषयं ज्ञात्वा बकः-"भवतः स्मरणं नास्ति एव। वयं ममापेक्षया ज्येष्ठस्य अकूपारनामकस्य कूर्मस्य समीपं गच्छामः। आगच्छन्तु" इति उक्त्वा तान् कूर्मसमीपम् अनयत्।

कूर्मः महाराजस्य दर्शनमात्रेण परिचयं प्राप्य स्वागतवचनानि उक्तवान्। विषयं ज्ञात्वा सः पुनः अवदत् "राजन्! भवन्तम् अहं कथं विस्मरेयम्? दानशीलः इन्द्रद्युम्नः किल भवान्? भवता याः गावः दत्ताः तासां खुराणाम् आघातेन एव एषः सरोवरः निर्मितः। अतः एव एतस्य इन्द्रद्युम्नसरोवरः इति नाम" इति।

अपरक्षणे देवलोकतः दिव्यरथः अवतीर्णः। "राजन्! भवतः कीर्तिः इतोऽपि भूलोके सजीवा अस्ति। अतः भवान् स्वर्गलोके निवसितुम् अर्हति" इति उक्तवन्तः देवदूताः। चतुर्णाम् अपि अनुमतिं स्वीकृत्य देवलोकं गतवान् इन्द्रद्युम्नः।





# चोरस्य उपकारः

पूर्वम् एकस्मिन् नगरे कनकराजः नाम कश्चित् चोरः आसीत्। कनकाम्बा तस्य पत्नी। पत्नी पतिः च समानगुणशालिनौ। यथा नाम्नाः साम्यं तथैव व्यवहारे अपि तयोः साम्यम् आसीत्। यतः उभौ अपि चोरौ।

विवाहसमनन्तरं एकदा कनकराजः कनकाम्बायै एकां नूतनां शाटिकां चौर्येण आनीय दत्तवान्। तत् ज्ञात्वा पत्नी बहु आनन्दम् अनुभूतवती। 'मम पतिः अपि चोरः। एतत् मम सौभाग्यम्' इत्येव चिन्तितवती। स्वपत्युः बुद्धिमत्तायाः प्रशंसां कृतवती च।

एवमेव कालः गच्छति। तयोः दम्पत्योः चौर्यगुणं वर्धते एव। परस्परं साहाय्यम् आचरन्तौ तौ ग्रामे तत्र तत्र चौर्यं कुर्वन्तौ कालं यापयतः। यदा तयोः चौर्यगुणस्य प्रकटनसन्दर्भः आपतति तदा तस्मात् प्रदेशात् तौ पलायनं कुरुतः। अन्यग्रामं गत्वा भाटकगृहं प्राप्य तत्र निवसतः। पुनः अपि चौर्यस्य आरम्भः।

यद्दिने नूतनगृहं प्रविष्टं तद्दिने एव कनकाम्बा प्रातिवेशिनीं वशीकर्तुं प्रयत्नं करोति। तस्याः गृहं गत्वा –"भगिनि ! मम अङ्गणे पुष्पाणि विकसितानि। भवती साक्षात् लक्ष्मीः इव अस्ति। भवत्यै शोभन्ते एतानि पुष्पाणि" इति तस्याः स्तुतिम् आरभते स्म। किञ्चित्कालं सम्भाषणं कृत्वा यत्किमपि वस्तु चोरयित्वा आनन्देन ततः प्रत्यागच्छति स्म।

एवमेव एकवारं तौ नूतनग्रामं प्रविष्टौ। तत्रापि कनकाम्बा कानिचन लघु लघु चौर्याणि कृतवती। एकस्मिन् सायङ्काले सर्वाः प्रातिवेशिन्यः एकत्र मिलित्वा गृहकार्यादिविषये सम्भाषणं कुर्वन्ति स्म।

"सुभद्रा"



अस्माभिः जागरूकैः भवितव्यम्। पश्यन्तु! एकस्मिन् मासे एव अहम् एतस्य मूलम् अन्वेषयिष्यामि" इति। 'एवम् उक्तं चेत् तासां स्वविषयकसंशयः निवारितः भवति' इति तस्याः आशयः आसीत्।

कनकाम्बा यानि वस्तूनि चोरयति तानि वस्तूनि तस्याः पतिः ग्रामान्तरं गत्वा विक्रीय लब्धेन धनेन द्यूतक्रीडां क्रीडित्वा सर्वं व्ययीकरोति स्म। एतत् असहमाना कनकाम्बा एकस्मिन् दिने पतिम् उक्तवती- "अहं केवलं सम्पादयन्ती अस्मि। अद्यत्वे भवान् किमपि कार्यं न करोति। भवान् परमालसः सञ्जातः" इति।

"भवत्याः कथनस्य आशयः कः? मया इदानीं किं करणीयम्?" इति पतिः निरासक्त्या पृष्टवान्।

तदा कनकाम्बा- "पश्यतु, पार्श्वगृहस्य अङ्गणे परिपक्वः कदलीगुम्फः विराजते। रात्रौ गत्वा तत् चोरयित्वा आनयावः। तस्मिन् गुम्फे शताधिकफलानि सन्ति" इति मन्द-स्वरेण उक्तवती।

"एवं वा? रात्रौ आनयामि। चिन्ता मास्तु" इति कनकराजः उक्तवान्।

तस्मिन् दिने मध्यरात्रे कनकराजः लवित्रं गृहीत्वा पार्श्वगृहस्य भित्तिं लङ्घितवान्। तं फलगुम्फं कर्तयित्वा पत्न्याः हस्ते दत्तवान्।

कनकाम्बा अपि तासां मध्ये गत्वा उपविष्टवती।

वार्तालापमध्ये अवकाशं प्राप्य सा- "अहं यदा एतत् गृहं आगतवती, तदा मया न ज्ञातम्। अत्र अस्माकं मध्ये एव कश्चन चोरः स्यात्। यतः त्रिदिनात् प्राक् मम पत्युः वेष्टी नष्टा। ह्यः कूपस्य समीपे स्थापितम् एकं पात्रं नास्ति। एवं प्रतिदिनम् एकैकं वस्तु न दृश्यते" इति उक्तवती।

तत् श्रुत्वा अन्याः अपि- "सत्यम् अस्माकं गृहे अपि एषु दिनेषु एवमेव भवति" इति नष्टानि स्वकीयवस्तूनि उक्तवत्यः। तदा पुनः कनकाम्बा उक्तवती- "वयं तूष्णीं भवामः चेत् एतत् चौर्यकार्यं वर्धते एव।

पुनः भित्तिम् उल्लङ्घ्य पत्न्याः समीपम् आगतवान्। उभौ अपि फलगुम्फं गृहीत्वा परमसन्तोषम् अनुभवन्तौ गृहम् आगत्य द्वारं पिहितवन्तौ।

कनकाम्बा तं गुम्फं गोण्यां स्थापयित्वा अट्टे स्थापितवती। उभौ अपि स्वकीयं साहसं बुद्धिमत्तां च सगर्वं परस्परं वदन्तौ निद्रां कृतवन्तौ!

प्रातःकाले कनकराजस्य आक्रन्दनेन कनकाम्बा जागरिता। तत्र तया दृष्टं यत् समग्रं गृहम् अस्तव्यस्तम्। गृहस्य द्वारम् उद्घाटितम् अस्ति। भीता कनकाम्बा कण्ठं स्पृष्टवती। धृता स्वर्णमाला नास्ति!

कण्ठहारः अपि चोरेण नीतः इति निश्चित्य "अहो! चौर्यं प्रवृत्तम्। चौर्यम्.... चौर्यम्...." इति उच्चस्वरेण रोदनं कृतवती सा।

एतावति काले कनकराजः उद्घाटितायाः पेटिकायाः अन्तः अन्वेषणं कुर्वन्- "अये पश्यतु, अत्र स्थापितानि त्रिसहस्ररूप्यकाणि न सन्ति। आवयोः सर्वनाशः एव जातः" इति आक्रोशनं कृतवान्। तयोः आर्तनादं श्रुत्वा प्रातिवेशिकाः समागतवन्त। कनकाम्बा रुदती "किमपि नास्ति! सर्वं गतम्! हन्त! हन्त! दीनबन्धो! देव!" इति भूमौ लुठन्ती रोदनं कृतवती।

तयोः सान्त्वनार्थम् आगतेषु प्रातिवेशिकेषु पार्वती अपि अन्यतमा। सा प्रकोष्ठस्य मध्ये



स्थितं कदलीगुम्फं दृष्ट्वा "किम् एतत्? अस्माकं वाटिकायां प्रवृद्धः कदलीगुम्फः नास्ति, केनापि चोरितं स्यात् इति चिन्तयन्ती आसम्। तत् कथं भवतां गृहे अस्ति?" इति पृष्ट्वा कनकाम्बां कनकराजं च दृष्टवती।

कनकाम्बा- कनकराजयोः अपि आश्चर्यम् अभवत्। 'अट्टे स्थापितः कदलीगुम्फः कथम् अधः आगतः?' इति अज्ञात्वा तौ परस्परं मुखं पश्यन्तौ लज्जया शिरः अवनमय्य स्थितवन्तौ। तस्मिन् कदलीगुम्फे एका चिटिका संलग्ना आसीत्। तस्यां चिटिकायां किमपि लिखितम् आसीत्। तत् दृष्ट्वा पार्वताम्बा चिटिकां गृहीत्वा एकवारं मनसि एव पठित्वा अनन्तरम् उच्चैः पठितवती। तस्मिन् एवं लिखितम् आसीत्- "एतावत्पर्यन्तम् अहं निरुद्योगी आसम्। उद्योगप्राप्त्यै प्रयतमानः ग्रामं ग्रामम् अटन् एतं ग्रामं प्राप्तवान्। तत्र पार्श्वगृहे चौर्यं कुर्वन्तौ भवन्तौ दृष्टवान्। भवतोः सम्पत्तिः कष्टेन न आर्जितम्, अपि तु चौर्येण इति ज्ञातवान्। अतः सर्वा सम्पत्तिः मया गृहीता। एतेन धनेन किमपि वाणिज्यं कृत्वा सगौरवं जीवनं यापयिष्यामि। 'भवतोः चौर्यबुद्धिः अन्यैः ज्ञातव्या' इत्येतदर्थम् अहम् एतं कदलीगुम्फम् अधः स्थापितवान्। क्षाम्यतु माम्। भवदीयः चोरः" इति। एतत् सर्वं श्रुत्वा सर्वे तौ सम्यक् तर्जयित्वा-"भवन्तौ कारागृहवासयोग्यौ। किन्तु भवद्भ्याम् आर्जितम् इदानीं किमपि नास्ति। कपटेन आर्जितं चोरेण नीतम्। इतःपरं वा सन्मार्गे गच्छताम्" इति उक्तवन्तः। पार्वती स्वकीयं कदलीगुम्फं स्वगृहं नीतवती।

कनकराजः कनकाम्बा च अपमानेन तस्याम् एव रात्रौ कमपि अनुक्त्वा कुत्रापि गतवन्तौ।

'अनामिकः चोरः समीचीनं पाठं पाठितवान्। तेन अस्माकं ग्रामस्य सुखम् अभवत्' इति सर्वे ग्रामीणाः तस्य चोरस्य प्रशंसां कृतवन्तः।



# पुरस्कारदानम्

चन्द्रनगरस्य राजा सुन्दरवर्मा। तस्य पुरस्कारदानप्रवृत्तिः सीमातीता। पदे पदे सः पुरस्कारं ददाति। यदा तेन वार्धक्यं प्राप्तं तदा एषा प्रवृत्तिः पूर्वापेक्षया द्विगुणिता अभवत्। मन्त्री सदा महाराजस्य पार्श्वे तिष्ठन् महाराजस्य अतिदानं निवारयति स्म।

एकदा राजा मन्त्रिणा सह उद्याने विहरन् आसीत्। सेवकाः अपि तेन सह आसन्। तदा महाराजः कश्चित् नूतनं पक्षिणं दृष्टवान्। तत्क्षणे एव भटद्वारा तं पक्षिणं बन्धयित्वा आनायितवान्। "एतस्य पक्षिणः नाम किम्?" इति पृष्टवान् च। तदा एकः अग्रे आगत्य- "प्रभो! नूतनपक्षी किल एषः? अतः कोऽपि नाम न जानाति। नामविषये पक्षी एव प्रष्टव्यः" इति।

"योग्या सूचना" इति सन्तोषं प्रकटयन् राजा तस्मै हस्ते स्थितं सुवर्णकङ्कणं पुरस्काररूपेण दत्तवान्। पक्षिणं नामविषये पृष्टवान् च।

पक्षिणः मुखात् उत्तरं किमपि न आगतम्। तदा अन्यः- "महाप्रभो! पक्षी बधिरः मूकः वा स्यात्। अतः उत्तरं दातुं न शक्नोति" इति उक्तवान्।

एतेन सन्तुष्टः राजा अन्यस्मै अपि एकं कङ्कणं दत्तवान्। तदा उत्साहिताः अन्ये अपि सेवकाः पक्षिणः विषये सर्वज्ञाः इव व्यवहरन्तः किमपि किमपि उक्त्वा पुरस्कारं प्राप्तुं प्रवृत्ताः। "एवं चेत् महाराजस्य सर्वाणि आभरणानि एते अपहरन्ति" इति चिन्तयित्वा मन्त्री सेवकं संज्ञया सूचितवान्– 'पक्षिणं त्यजतु' इति।

पक्षी यदा उड्डीय गतः तदा महाराजः व्याकुलितः जातः। तदा मन्त्री पृष्टवान्– 'प्रभो! पक्षिणः नाम वयं जानीमः। स्वयं पक्षी स्वनाम न वदति। एतादृशेन पक्षिणा किं प्रयोजनम्? तस्य उड्डयनम् एव वरं किल?" इति। "मन्त्रिवर्य! माणिक्यसदृशं वचनम् उक्तवान् भवान्" इति परमसन्तोषं प्रकटयन् राजा स्वकण्ठे स्थितं रत्नहारं मन्त्रिणः कण्ठे स्थापितवान्।





# सम्माननयोग्यता

पूर्वं कर्पूरदेशं महाराजः माणिक्यवर्मा पालयति स्म। तस्य आस्थाने गङ्गाधरमिश्रः नाम कविः आसीत्। कवेः महाराजस्य च बाल्यतः एव मैत्री। गङ्गाधरमिश्रस्य सरसैः काव्यैः साहित्यप्रियः माणिक्यवर्मा सन्तुष्टः आसीत्।

एकदा माणिक्यवर्मा स्वजन्मोत्सवसन्दर्भे श्रेष्ठं कञ्चित् कविं सम्मानयितुं सङ्कल्पितवान्। अग्रहारदानेन धनदानेन च कविः सम्माननीयः इति तस्य विचारः। किन्तु 'कः महाराजेन सम्मान्यते?' इत्येषः विचारः न प्रकटितः आसीत्।

एतदनन्तरं कदाचित् गङ्गाधरमिश्रस्य गृहे कवीनां गोष्ठी आसीत्। राजधान्याः सर्वे कवयः तत्र सम्मिलिताः आसन्। तत्सन्दर्भे सम्भाषणमध्ये सुधाकरः नाम कविः- "विरिञ्चि-नगरस्थं स्वर्णकुन्तलनामकं कविं महाराजः सम्मानयिष्यति इति श्रुतम्। राजा दूतद्वारा एतां वार्तां तस्मै कवये प्रेषितवान् इत्यपि श्रुतम्। जन्मदिनोत्सवसन्दर्भे अवश्यम् आगन्तव्यम् इत्यपि राजा वार्तां प्रेषितवान्" इति उक्तवान्।

"एतत् न विश्वासार्हम्। महाराजस्य आप्तमित्रेण गङ्गाधरमिश्रेण एव अज्ञातं विषयं भवान् कथं ज्ञातवान्? एषा तु किंवदन्ती केवलं स्यात्" इति उक्तवान् अन्यः कविः।

"महाराजः यं दूतं विरिञ्चिनगरं प्रति प्रेषितवान् तस्य दूतस्य पत्नी मम गृहस्य कर्मकर्याः सखी। तस्याः द्वारा अहम् एतां वार्ताम् अद्य प्रातः ज्ञातवान्" इति उक्तवान् सुधाकरकविः।

एतां वार्तां श्रुतवतः गङ्गाधरमिश्रस्य मनसि असमाधानभावना उत्पन्ना। तथापि सः सर्वेषां कवीनां निर्गमनपर्यन्तं मौनम् आसीत्। अनन्तरं माणिक्यवर्मणः आस्थानं गत्वा-

"भवतः जन्मदिनोत्सवसन्दर्भे कवेः सम्माननं यत् करणीयम् इति चिन्तितं तद्विषये कोऽपि निर्णयः स्वीकृतः इति श्रुतवान्। भवता सत्क्रियमाणः कविः कः इति अहं ज्ञातुम् अर्हामि वा ?" इति पृष्टवान्।



माणिक्यवर्मा मन्दहासं प्रकटयन्- "प्राण-प्रियाय भवते एषा वार्ता पूर्वम् एव निवेदनीया आसीत्। तदस्तु, इदानीं निवेदयामि- "विरिञ्चिनगरस्थं स्वर्णकुन्तलं नाम कविम् अहं सत्करिष्यामि" इति उक्तवान्।

गङ्गाधरमिश्रः क्षणकालं मौनं स्थित्वा उक्तवान्- "प्रभो ! एषः सत्कारः मया एव प्राप्यते इति नगरे सर्वे चिन्तयन्तः सन्ति। भवतः निर्णयं विरुध्य वदामि इति न चिन्त-यतु। आत्मीयताकारणतः पृच्छामि। केन कारणेन अहं सत्कारार्थम् अनर्हः जातः ?" इति।

तदा माणिक्यवर्मा हसन् उक्तवान्- "अत्र अनर्हतायाः कोऽपि प्रश्नः नास्ति। सुवर्ण-कुन्तलस्य भवतः च प्रतिभायाः तोलनम् अपि अहं न कृतवान्। मम दृष्ट्या भवान् महाकविः एव। अत्रान्तरे अहं स्वर्णकुन्तलेन लिखितं काव्यं पठितुम् अवकाशं प्राप्तवान्। सः प्रतिभावान् कविः। तथापि सः राजाश्रयम् अनिच्छन् कुत्रापि देशस्य कोणे जीवति। एतादृशस्य सम्माननं मम कर्तव्यम् इति चिन्तितवान् अहम्। यदि एतादृशं न सम्मानयेयं तर्हि मया अपराधः कृतः भवेत्" इति।

गङ्गाधरमिश्रः किमपि वक्तुम् उद्युक्त। अत्रान्तरे कश्चन राजभटः आगत्य- "महाप्रभो ! विरिञ्चिनगरीयः स्वर्णकुन्तलः नाम कविः भवतः दर्शनम् इच्छन् द्वारि तिष्ठति" इति निवेदितवान्।

तदा गङ्गाधरमिश्रः तिरस्कारभावेन उक्त-वान्- "पश्यतु, श्रीमन् ! धनप्राप्तेः विषयं श्रुत्वा तत्क्षणे एव अत्र आगतवान् !" इति।

माणिक्यवर्मा किमपि उत्तरम् अदत्त्वा स्वर्णकुन्तलम् अन्तः प्रेषयितुं सेवकम् आदिष्ट-वान्। अन्तः आगतं स्वर्णकुन्तलम्

पृष्टवान् च- "इतोऽपि पञ्चदशदिनानाम् अनन्तरं किल सम्माननम्? एतावच्छीघ्रम् एव किमर्थम् आगतवान्? किमपि विशेष-कारणम् स्यात् वा?" इति।

महाराजस्य प्रश्नेन चकितः स्वर्णकुन्तलः- "मम आगमनेन अपार्थः कोऽपि कल्पितः इति मन्ये। क्षन्तव्यः अहम्। केन कारणेन मम सम्माननं करणीयम् इति चिन्तितम्? एतत् ज्ञातुम् एव इदानीम् अत्र आगतवान्" इति।

तदा आश्चर्यं प्रकटयन् माणिक्यवर्मा उक्तवान्- "सर्वे कवयः मम सम्माननं किमर्थं न कृतम् इति पृच्छन्ति। भवान् तु आत्मनः सम्माननं ज्ञात्वा 'मम सम्माननं किमर्थम्' इति पृच्छाति किल! किम् एतत् विचित्रम्?" इति।

स्वर्णकुन्तलः शान्तस्वरेण उक्तवान्- "प्रसिद्धः कविः गङ्गाधरमिश्रः भवतः आस्थाने अस्ति। अहं तु अप्रसिद्धः। अपरिचितः च। एवं स्थिते मम सम्माननं किमर्थम् उद्दिष्टम्? भवता उक्तं कारणम् उचितम् इति मम तृप्तिः भवति चेत् अहं सम्माननम् अङ्गीकरोमि। अन्यथा मम सम्माननं मास्तु एव। स्पष्टोक्त्यै क्षन्तव्यः अहम्" इति।

तदा गङ्गाधरमिश्रः मध्ये उक्तवान्- "मित्र! भवता प्रस्तुतः कविः गङ्गाधरमिश्रः अहम् एव। भवतः कविताप्रौढता मया न दृष्टा। किन्तु महाराजस्य पुरतः यः अभिप्रायः प्रकटितः तेन एव अहं ज्ञातवान् यत् भवान् सम्माननम् अर्हति इति। महाराजः भवतः काव्यप्रौढतां दृष्ट्वा सन्तुष्टः सन् सम्माननार्थं निश्चितवान्। महाराजस्य निश्चयः योग्यः इत्येतत् इदानीं प्रमाणीकृतम्" इति।

गङ्गाधरमिश्रस्य वचनेन माणिक्यवर्मा सन्तुष्टः अभवत्।

स्वजन्मदिनोत्सवदिने महाराजः स्वर्णकुन्तलं गङ्गाधरमिश्रं च विशेषतया सम्मानितवान्।






# १३

[चन्द्रवर्मा कापालिकया सह मान्त्रिकपर्वतम् आरूढवान्। तत्र कालनागः मानवजन्म प्राप्तवान्। तस्य नाम कालकेतुः इति निश्चितम्। चन्द्रवर्मा कालकेतुः च कापालिकायाः कृते गृहं निर्मितवन्तौ। अपरस्मिन् दिने चन्द्रवर्मा अरण्ये सञ्चारसमये अयःश्रृङ्खलां प्राप्तवान्। दैत्याकारकः शुनकः कश्चन चन्द्रवर्मणः उपरि आक्रमणं कर्तुम् उद्युक्तः। तदनन्तरम्...]

सः दैत्याकारकः शुनकः भयङ्करं मुखं विशालम् उद्घाट्य दंष्ट्रां प्रदर्शयन् चन्द्रवर्माणं कण्ठदेशे ग्रहीतुम् इच्छन् दूरतः एव उत्प्लवनम् अकरोत्। अत्रान्तरे चन्द्रवर्मा खड्गाग्रेण शुनकं विदारयितुं प्रयत्नं कुर्वन् पदम् अग्रे स्थापितवान्। तत्समये तस्य वामहस्ते स्थिता श्रृङ्खला दैत्यशुनकस्य शिरसि वेगेन अपतत्। तेन आघातेन शुनकः कर्कशस्वरेण आक्रोशनं कुर्वन् दशपदानि गत्वा उन्मुखतया अपतत्। तत्रैव त्रिचतुर्वारं लुण्ठनं कृत्वा पुनः उत्थितवान्।

चन्द्रवर्मा विद्युद्गत्या परिवृत्य भीकरतया गर्जन्तं तं शुनकं मारयितुं सिद्धः सन् अग्रे गतवान्। शुनकः तु तत्रैव स्थित्वा चन्द्रवर्मणः हस्ते स्थितां श्रृङ्खलां एकदृष्ट्या पश्यन् पुनः पुच्छं गोपयन् ततः पलायनं कृतवान्। किञ्चिद्दूरं गत्वा 'कुयँ' 'कुयँ' इति शब्दं कुर्वन् पुच्छं चालयन् स्थितवान्। पूर्वतनभीकरता



ध्वनिना भषन् गुल्मस्य दिशि चन्द्रवर्माणम् अनयत्। 'शुनकः मां कुत्रापि नेतुम् इच्छति' इति ज्ञात्वा चन्द्रवर्मा धैर्येण शुनकम् अनुसृतवान्।

"एषः न शुनकरूपी राक्षसः। अपि तु सामान्यः कश्चन वन्यः शुनकः। अरण्ये एतं कश्चित् पालयति। एषा श्रृङ्खला तस्यैव सम्बन्धिनी स्यात्" इति चिन्तितवान् चन्द्रवर्मा।

कण्टकाकीर्णेन मार्गेण गच्छन् शुनकः समीपे स्थितं पर्वतप्रान्तं प्राप्तवान्। पर्वतं परितः काचित् लघुनदी प्रवहति स्म। नद्याः तीरे स्थितं कुटीरं दृष्टवान् चन्द्रवर्मा। 'अस्मिन् कुटीरे प्रायः एतस्य शुनकस्य यजमानः स्यात्। तस्य समीपम् एषः मां नयति इति मन्ये' इति चिन्तितवान् सः। श्रृङ्खलां समग्रां शुनकस्य कण्ठे बद्ध्वा शुनकम् एव अनुसरन् अग्रे गतवान्। नद्याः तीरम् अनुसरन्तौ कुटीरसमीपम् आगतवन्तौ।

'पादशब्दं श्रुत्वा कश्चित् बहिः आगच्छेत्' इति चन्द्रवर्मणः या निरीक्षा आसीत सा न पूर्णा। शुनकः उच्चैः भषन् कुटीरस्य अन्तः गत्वा बहिः आगत्य परितः अटनम् अकरोत्।

तथाऽपि तत्र कोऽपि न दृष्टः। 'कीदृशः जनः स्यात् अत्र ?' इति चिन्तयन् चन्द्रवर्मा जागरूकतया कुटीरस्य अन्तः गतवान्।

इदानीं न दृश्यते स्म।

पिशाचः इव हठात् आक्रमणं कर्तुं प्रवृत्तस्य शुनकस्य एतादृशं सौम्यव्यवहारं दृष्ट्वा चन्द्रवर्मा आश्चर्यचकितः। सः हस्तस्थितां श्रृङ्खलां शुनकस्य दिशि क्षिप्तवान्। शुनकः श्रृङ्खलाम् एकवारम् आघ्राय मुखेन गृहीत्वा चन्द्रवर्मणः समीपम् आगच्छत्। पुच्छं चालयन् अतिष्ठत् च। एतेन चन्द्रवर्मा ज्ञातवान् यत् श्रृङ्खलायाः किमपि वैशिष्ट्यम् अस्ति इति। अनन्तरं सः श्रृङ्खलां शुनकस्य मुखतः स्वीकृतवान्। विधेयतया स्थितं तं शुनकं तया एव श्रृङ्खलया बद्ध्वा तस्याः अपरं अर्धभागं हस्तेन गृहीतवान्।

शुनकः परितः एकवारं दृष्टिं प्रसार्य उच्च-



कुटीरे कोऽपि न आसीत्। एकत्र कोणे पुरातन-मञ्चः आसीत्। अपरत्र चुल्ली, द्वित्राणि मृत्पात्राणि, घटाः च आसन्। अन्यत्र नाग-दन्तिकायां छिन्नानि द्वित्राणि वस्त्राणि कम्बलः च आसन्।

"अस्मिन् गृहे कोऽपि एकाकी निर्धनः निवसति। प्रायः सः निर्गतिकः स्यात्। स्त्रीवसतेः चिह्नं किमपि न दृश्यते" इति चिन्तितवान् चन्द्रवर्मा।

"एतादृशे घोरे अरण्ये एषः निर्धनः किमर्थं वसति? तादृशी कष्टपरिस्थितिः का आगता स्यात् एतस्य? अथवा एषः कश्चन मान्त्रिकः स्यात् वा? शुनकः अपि असामान्यः। एवं तर्हि मन्त्रतन्त्रसम्बन्धीनि वस्तूनि अत्र कुत्रापि भूमौ पात्रेषु वा स्युः वा?"

एवं विविधविकल्पेन पीडितः चन्द्रवर्मा अग्रे गत्वा सर्वाणि मृत्पात्राणि परीक्षितवान्। अत्र निवसन् पुरुषः नरभक्षकः यदि कदाचित् स्यात् तर्हि तत्पात्रेषु मानवानाम् अस्थीनि दृश्येरन् किल? किन्तु तादृशं किमपि चन्द्रवर्मणा तत्र न दृष्टम्। 'एवं तर्हि एषः पुरुषः मान्त्रिकः तु न' इति निश्चितवान् चन्द्रवर्मा।

यावत् सः अवनतः सन् सर्वाणि पात्राणि परीक्षमाणः आसीत् तावता पृष्ठतः सूचनात्मकः गर्जनध्वनिः श्रुतः- "अये! अविचलः तथैव तिष्ठतु....। यदि किञ्चित् वा चलति तर्हि मम शूलायुधस्य आहारः भविष्यति। पृष्ठतः अपश्यन् एव मम प्रश्नानाम् उत्तरं ददातु" इति। कर्णकठोरः अतिभयङ्करः च आसीत् सः ध्वनिः।

चन्द्रवर्मणः समग्रं शरीरं स्वेदजलेन क्लिन्नम्। कीदृशः शत्रुः पृष्ठतः स्यात् इति द्रष्टुम् अपि अवकाशः नास्ति। 'प्रायः शत्रुणा तीक्ष्णं शूलायुधं गृहीतं स्यात्। अतः पृष्ठतः परिवर्तनार्थं प्रयत्नः व्यर्थः एव। परिवृत्य स्थितं चेत् मां मारयेत् सः। केवलम् उत्तरकथनम् एव उचितः मार्गः।'

"अहं न भवतः शत्रुः, अपि तु स्नेहितः एव। मम मुखदर्शनेन भवान् एतं विषयं

ज्ञातुम् अर्हति। यदि अनुमतिः अस्ति तर्हि परिवृत्य तिष्ठामि" इति चन्द्रवर्मा उक्तवान् भयम् अप्रदर्शयन्।

"भवान्....! मम स्नेहितः...!! छी...." इति तुच्छतया उक्त्वा पृष्ठतः स्थितः पुरुषः पृष्टवान्- "भवता सह आगताः राजभटाः कुत्र सन्ति?" इति।

"राजभटाः....!" आश्चर्येण पृष्टवान् चन्द्रवर्मा- "अहम् अरण्ये एकाकी सञ्चरन् अस्मि। दैववशात् प्राप्तायाः शृङ्खलायाः कारणतः अहं भवतः शुनकस्य आहारः तु न जातः। सः शुनकेन एव अहम् अत्र आनीतः। अन्यथा अहम् अत्र किमर्थम् आगच्छेयम्?" इति।

"तया शृङ्खलया भवान् रक्षितः इति तु सत्यम् एव स्यात्। मम पुत्रः तया एव शृङ्खलया एतं शुनकं बद्ध्वा बहिः नयति स्म। यदा राजभटाः तं नीतवन्तः तदा शृङ्खला मार्गे कुत्रापि पतिता। भवतः हस्ते तां शृङ्खलां दृष्ट्वा 'भवान् यजमानस्य स्नेहितः स्यात्' इति चिन्तयता शुनकेन भवान् अत्र आनीतः। अन्यथा भवतः मरणम् एव शरणम् स्यात्। इदानीं मम पुत्रः कुत्र? सः किं जीवति? राजा तं मारितवान् तु न किल? मम पुत्रस्य योगक्षेमवार्ता मया प्रथमं ज्ञातव्या। निर्वञ्चनया यावत् जानाति तावत् वदतु। तदानीम् एव उभयोः अपि हितम्" इति उक्तवान् सः पुरुषः।



'सः किं वदति' इति न ज्ञातवान् चन्द्रवर्मा। "प्रायः एषः मां राजभटं चिन्तयति। एतस्य पुत्रेण दुर्गतिः या प्राप्ता तत्र ममापि भागः अस्तीति भावयति। अतः एव शूलहस्तः मम पृष्ठतः स्थितः अस्ति। केन उपायेन विमोचनं प्राप्नोमि? हे भगवन्.... का एषा दुर्गतिः?"

अकस्मात् चन्द्रवर्मणः मनसि कश्चन उपायः स्फुरितः। सः कटौ स्थितं खड्गं प्रदर्शयन् पुरुषम् उक्तवान्- "अये! भवान् विनाकारणं मयि संशयं प्रकटयति। येन महाराजेन भवतः पुत्रः नीतः तस्य पक्षीयः न अहम्। सः राजा कः इत्यपि अहं न जानामि। मम कटिभागे स्थितं खड्गं भवान् एव स्वीकरोतु। तदा अहं निरायुधः भवामि। तेन मत्कारणतः भवतः भयं च अपसृतं भवति। तदा अभिमुखं उपविश्य सविस्तरं वार्तालापः कर्तुं शक्यते" इति।

चन्द्रवर्मणः वचनं यावत् न समाप्तं ततः पूर्वम् एव तदीयकटिभागतः खड्गम् आकृष्य स्वपार्श्वे स्थापयन् सः पुरुषः उक्तवान्- "अये! इदानीम् अभिमुखः भवतु। वञ्चनार्थं वृथा प्रयत्नं न करोतु। मम हस्ते खड्गः अस्तीति स्मरतु। अहं वयसा वृद्धः स्यां, किन्तु न वीर्येण" इति।

"हन्त! उज्जीवितः अहम्" इति उद्गारं प्रकटयन् चन्द्रवर्मा समाधानेन दीर्घं निःश्वस्य पृष्ठतः दृष्टवान्। सप्ततिवर्षीयः वृद्धः





कश्चित् तत्र आसीत्। श्वेतकेशस्य तस्य शरीरं वार्धक्येन जर्झरितम् आसीत्। नेत्रे रक्तवर्णे आस्ताम्। कोपयुक्ते अपि मुखे किञ्चन तेजः दृश्यते स्म। तस्य एकस्मिन् हस्ते शूलायुधम्, अपरहस्ते चन्द्रवर्मणा दत्तः खड्गः च आसीत्। नेत्रद्वयं तु रक्तवर्णेन ज्वलति इव।

''अहं राजभटः तु न। राज्यभ्रष्टः सन् अरण्येषु अटन् कश्चन राजकुमारः अहम्। भवान् तु ज्येष्ठः। मया कोऽपि अपराधः कृतः चेत् क्षन्तव्यः। भवतः कुमारं कः राजा नीतवान्? तस्य राज्ञः देशः कः? कुत्र निवसति सः? किं तस्य सैन्यबलम्?'' इति पृष्टवान् चन्द्रवर्मा।

''भवान् इदानीम् आत्मनः स्थितिं स्वयं न जानाति वा?'' इति संशयदृष्ट्या पश्यन् पृष्टवान् वृद्धः।

'तत् किमपि न जानामि' इति शिरश्चालन-पूर्वकं सूचितवान् चन्द्रवर्मा। वृद्धः पुनरपि परीक्षादृष्ट्या चन्द्रवर्माणं सम्यक् परिशील्य उक्तवान्- ''भवतः वेषेण व्यवहारेण च ज्ञातुं शक्यते यत् भवतः एतद्देशस्य परिचयः नास्ति इति। भवान् वस्तुतः राज्यभ्रष्टः राजकुमारः एव चेत् अहं भवतः साहाय्यं करोमि। प्रत्युप-काररूपेण भवता अपि साहाय्यं करणीयम्? एतत् अनुमतं वा भवतः? क्षणद्वयम् आलोच्य वदतु'' इति।

''मया कीदृशं साहाय्यं करणीयम्?'' इति चन्द्रवर्मा पृष्टवान्।

''मम पुत्रं रुद्रपुरमहाराजः शिवसिंहः बद्ध्वा नीतवान्। तस्य दृष्टिपथात् आत्मनं रक्षन् अहम् अरण्ये सञ्चरामि। राज्ञः विरोधं सम्पाद्य इतोऽपि कियत्पर्यन्तम् अहम् एवं सञ्चरामि इति न जानामि। यदि महाराजः मम पुत्रं मारितवान् स्यात् तर्हि मम जीवनम् अपि व्यर्थम् एव। यदि मम पुत्रः इतोऽपि जीवति तर्हि अहं महाराजस्य सन्धिं सम्पाद-यितुम् इच्छामि। तदानीं मया महाराजाय कांस्यदुर्गस्य गमनार्थं मार्गः यत्र सूचितः अस्ति तादृशं रेखाचित्रं दातव्यं भवेत्'' इति उक्तवान् सः वृद्धः।

"कांस्यदुर्गस्य रेखाचित्रं वा!" इति अत्याश्चर्यं प्रकटयन् चन्द्रवर्मा उक्तवान्- "एतस्य कांस्यदुर्गस्य विषये मया बाल्ये श्रुतम् आसीत्। एतत् दुर्गं पश्चिमसमुद्रप्रान्ते कुत्रापि अस्ति इति ज्येष्ठाः वदन्ति स्म। एतावतां वर्षाणाम् अनन्तरं भवतः मुखतः तद्विषये शृण्वन् अस्मि। किम् एतत् सत्यं स्यात् वा इति मम आश्चर्यम्" इति उक्तवान् चन्द्रवर्मा।

"भवतः आश्चर्यं सहजम्" इति उक्त्वा भूमिं पश्यन् वृद्धः क्षणकालं मौनम् आसीत्। अनन्तरं चन्द्रवर्माणं तीक्ष्णया दृष्ट्या पश्यन् उक्तवान्- "कांस्यदुर्गम् अन्वेष्टुं प्रयत्नं कृत्वा बहवः प्राणान् त्यक्तवन्तः। कोऽपि अद्यावधि न प्रत्यागतवान्। एतत् अपि जानाति वा भवान्?" इति। 'चन्द्रवर्मा अपि एतस्य दुर्गस्य अन्वेषणे आगतः स्यात्' इति चिन्तितवान् आसीत् वृद्धः।

"सत्यम्, यदा अहं बालः आसं तदा ज्येष्ठैः उच्यमानं श्रुतवान्। भवतः वचनेन तत्सर्वम् इदानीं स्मरामि। तावदेव" इति उक्तवान् चन्द्रवर्मा।

तदा वृद्धः मन्दहासं प्रकटयन् उक्तवान्- "तथा वा? कांस्यदुर्गस्य विषये भवान् सर्वं जानाति इति चिन्तितवान् आसम्। मम समीपे दुर्गमार्गप्रदर्शकं रेखाचित्रम् अस्ति किल? तत् मम पूर्वजैः कथञ्चित् सम्पादितम्।




एतां वार्तां रुद्रपुरराजः शिवसिंहः जानाति। अतः सः मां ग्रहीतुं भटान् प्रेषितवान्। अहं तैः आत्मानं रक्षन् अत्र आगतवान्। मम पुत्रः देवलः तैः बद्धः अस्ति। वस्तुतः यदि कांस्यदुर्गे यत् रत्नसुवर्णादिकं लभ्यते तस्य कश्चन भागः मह्यं दातुम् अङ्गीकृतं चेत् अहम् एतत् रेखाचित्रं दातुं सिद्धः अस्मि। भवान् अकस्मात् लब्धः। भवान् अस्मिन् व्यवहारे मध्यवर्ती भवतु इति मम अपेक्षा। देवलः अपि बन्धमुक्तः यथा भवेत् तथा करणीयम्। एवं चेत् अहं मया यावत् लभ्यते तत्र भवते अपि किञ्चित् ददामि। एषः किञ्चिद्-भागः अपि न अल्पः। तेन धनेन भवान् अपेक्षितां सेनां सङ्गृह्य नष्टं राज्यं पुनः प्राप्तुं

शक्नोति। किम् एतत् अनुमतं भवतः वा?" इति।

'एषः वृद्धः न सामान्यः' इति वस्तुस्थितिं ज्ञातवान् चन्द्रवर्मा। 'व्यूहरचनायां तन्त्रान्वेषणे इतरेषां वशीकरणे च एषः निस्सीमः। एतत्क्षेत्रे एतस्य महान् अनुभवः। एतस्य मैत्र्या मम कोऽपि लाभः स्यात् एव।'

"श्रीमन्! भवता उक्ताः नियमाः अनुमताः। कांस्यदुर्गगमनमार्गसूचकं तत् रेखाचित्रं प्रदर्शयतु तावत्" इति उक्तवान् चन्द्रवर्मा।

वृद्धः तृप्तिभावेन चन्द्रवर्माणं पश्यन् किमपि वक्तुम् उद्युक्तः। तदा बहिः कश्चन कोलाहलः श्रुतः। वृद्धः उत्प्लुत्य गत्वा द्वारसमीपे स्थित्वा बहिः दृष्टिं प्रसारितवान्। "पश्यतु मित्र! राजभटाः अत्र एव आगच्छन्तः सन्ति। मम पुत्रस्य च कोऽपि अपायः न भवति इति तैः वचनं दत्तं चेत् अहं तैः सह वार्तालापार्थं सिद्धः। कांस्यदुर्गं यावत् प्राप्यते तस्य अर्धभागः अपि तैः दातव्यः। भवान् अस्मिन् व्यवहारे मध्यवर्ती भवतु" इति त्वरया उक्त्वा द्वारम् उद्घाट्य बहिः धावन् वृक्षसमूहे विलीनः अभवत्।

क्षणद्वये प्रवृत्तं सर्वं दृष्ट्वा चन्द्रवर्मा स्तब्धः। 'एषः विचित्रः वृद्धः माम् अपाये पातयित्वा अरण्ये विलीनः अभवत् किल! इदानीं मया किं करणीयम्' इति चिन्तयन् आसीत् सः।

अत्रान्तरे खड्गत्रिशूलादिभिः आयुधैः सहिताः राजभटाः कुटीरम् आक्रम्य स्थितवन्तः।

"कः तत्र अन्तः? आगच्छतु बहिः। पलायनार्थं प्रयत्नः कृतः चेत् खड्गस्य आहारः भवेत्" इति राजभटाः उच्चैः उक्तवन्तः।

'यत्किमपि वा भवतु नाम' इति निश्चित्य चन्द्रवर्मा कुटीरस्य द्वारम् उद्घाट्य बहिः आगतवान्।

(अनुवर्तते,






# नटेशस्य सेवकः

दृढाग्रहवान् राजा त्रिविक्रमः यथाक्रमं पुनः तस्य वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवम् अवतार्य स्वीयभुजस्य उपरि संस्थाप्य पूर्ववत् श्मशानं प्रति मौनं चलितुम् आरब्धवान्। तदा शवस्य मुखतः एतानि वचनानि उच्चरितानि- ''भोः महाराज ! एतस्मिन् अतिभयङ्करे रात्रिकाले भवान् अत्यन्तश्रमपूर्णं साहसं कर्तुं प्रवृत्तः अस्ति। एतत् दृष्ट्वा मम तु भवतः विषये दया, आश्चर्यं च। मम एकः संशयः अपि अस्ति यत् केनापि प्रियजनेन वा गुरुमुखेन वा उक्तस्य वचनस्य अन्तरार्थं भवान् न ज्ञातवान् स्यात् इति। एतादृशदोषेण एव राजसत्कारयोग्यः नटेशः नाम महाकविः आत्मगौरवच्युतः जातः। भवतः अपि तादृशी दुरवस्था मास्तु इति उद्देशेन तस्य कथां श्रावयामि। कथा-श्रवणेन मार्गायासः अपि न्यून' भवति

## वेतालकथा



किल ?'' इति।

अनन्तरं वेतालेन कथा आरब्धा—

नटेशः विमलगिरिमहाराजस्य आस्थानकविः। तस्य उपरि महाराजस्य महती प्रीतिः। नटेशस्य दर्शनं विना परस्परं सम्भाषणं विना च एकं दिनम् अपि यापयितुं महाराजः न इच्छति।

नटेशस्य एतत् वैशिष्ट्यम् आसीत् यत् तस्य सामान्यसम्भाषणम् अपि काव्यमयं भवति स्म। किन्तु तत् न कठिनम्, अपि तु सरलं सुलभबोध्यं च। एतेन नगरे सर्वत्र तस्य कीर्तिः प्रसृता आसीत्।

केशवः नटेशस्य गृहे कश्चन सेवकः। सः नटेशस्य वचनानि श्रोतुम् एव तस्य गृहे सेवकवृत्तिं करोति स्म। नो चेत् सः अन्यत्र इतोऽपि उत्तमम् उद्योगं, अधिकं वेतनं च प्राप्तुं शक्तः अभविष्यत्। विरामसमयेषु सः साहित्याभ्यासं करोति। नटेशस्य प्रत्येकं वचनम् अपि सः पुनः पुनः स्मरन् हृद्गतं करोति। यस्य कस्य अपि वचनस्य अर्थं ज्ञातुम् असमर्थः भवति चेत् नटेशं पृष्ट्वा अर्थं जानाति। तस्य जिज्ञासाम् आसक्तिं च दृष्ट्वा प्रीतः नटेशः अपि सन्तोषेण तस्य प्रश्नान् उत्तरयति।

एवं क्रमेण केशवस्य अपि काव्यशैल्याः अभ्यासः जातः। यदा सः बहिः गच्छति तदा आपणेषु इतरत्र च काव्यशैल्या एव व्यवहरति। तस्य सम्भाषणचातुर्यं दृष्ट्वा मुग्धाः केचन- ''एषः नटेशस्य गृहे खलु कार्यं करोति ? अतीव श्रद्धालुः अपि। अतः सहजतया एव एतेन काव्यशैली सम्पादिता'' इति वदन्ति स्म।

कदाचित् केनापि कारणेन अस्वस्थः नटेशः राजदर्शनार्थं गन्तुम् असमर्थः अभवत्। तत्र महाराजः प्रतीक्षणं करोति इति चिन्तयन् नटेशः केशवम् आहूय- ''केशव, राजभवनं गत्वा अद्य चकोरस्य अमावास्याप्राप्तिः इति महाराजम् उक्त्वा आगच्छतु भोः'' इति उक्तवान्।

चकोरः सर्वदा चन्द्रस्य आगमनं प्रतीक्षमाणः

कालं यापयति। सः कौमुदीं प्रीत्या पिबति इति कवयः वदन्ति किल? अत्र नटेशः चन्द्रः। अद्य सः राजभवनं न गच्छति। अतः महाराजस्य कौमुदीप्राप्तिः नास्ति इति विचारं काव्यशैलीम् अनुसृत्य नटेशः उक्तवान्। तस्य अभिप्रायं झटिति केशवः ज्ञातवान्। अतः सः किमपि अनुक्त्वा तूष्णीं ततः राजसमीपं प्रस्थितवान्।



सः महाराजस्य समीपं गत्वा "प्रभो! एतत् दूतवाक्यं शृणोतु- भोः चकोर! भवतः अमावास्या भवति इति भवन्तं निवेदयितुं चन्द्रः वार्तां प्रेषितवान् अस्ति" इति उक्तवान्।

केशवः नटेशस्य सकाशात् आगतवान् अस्ति इति राजा ज्ञातवान्। सः सद्यः एव "एतत् श्रुत्वा मम महान् प्रमोदः जातः इति चन्द्रं वदतु" इति उक्तवान्। केशवः मस्तकं चालयन् अस्तु इति सूचितवान्।

तत् दृष्ट्वा महाराजः "किं भोः! मम किमर्थं सन्तोषः जातः इति भवान् ज्ञातवान् वा?" इति पृष्टवान्।

"भवतः अभिप्रायं ज्ञातुं कथम् असमर्थः भवेयम्? भवान् महास्वार्थपरः अस्ति" इति निश्शङ्कम उक्तवान् केशवः।

तस्य उत्तरं श्रुत्वा महाराजस्य मुखम् विवर्णं जातम्। सः केशवं दृष्ट्वा "नटेशस्य गृहे कार्यं कुर्वाणः भवान् मम वचनानाम् अन्तरार्थं जानाति इति मया चिन्तितम्। किन्तु अहं स्वार्थी अस्मि इति प्रमादेन भवान् विरुद्धार्थं गृहीतवान्। मम स्वार्थपरत्वं कीदृशम् इति इदानीं वर्णनीयम्। नो चेत् भवता कठिनः कारागृहवासः अनुभोक्तव्यः भवेत्" इति उक्तवान्।

तदा केशवः विनीतः सन्-"अद्य तु अमावास्या। किन्तु एतस्मिन् विषये चिन्तां त्यक्त्वा भवान् 'इतःपरं शुक्लपक्षः खलु भविष्यति, तदा चन्द्रस्य कौमुदी प्रतिदिनं प्रवर्धते' इति कल्पयित्वा महान्तं सन्तोषम् अनुभवन् अस्ति। अतः एव भवान् स्वार्थपरः इति अहं कथितवान्" इति उक्तवान्।



"न्यायरीत्या भवान् एव राजा। किन्तु इदानीं मम स्वामी एव राजा जातः अस्ति। अतः अहं राजपक्षीयः प्रबलः अस्मि" इति उक्तवान् केशवः।

राजशब्दस्य चन्द्रः इत्यपि अर्थः अस्ति इति केशवः जानाति स्म। अहं चन्द्रः इति नटेशस्य वाक्यस्य अभिप्रायः आसीत् खलु ?

सन्तुष्टः महाराजः केशवं बहुधा श्लाघयित्वा बहुमूल्यं पारितोषिकं तस्मै दत्त्वा "अमावास्यादिनेषु दीपस्य प्रकाशः अपेक्षितः। भवान् तदा तदा आगच्छतु" इति उक्त्वा तं प्रेषितवान्।

तस्य वचनं श्रुत्वा महाराजः सन्तोषेण "साधु साधु ! निश्चयेन भवान् नटेशस्य योग्यः अनुचरः। भवतः वचनानि श्रुत्वा अहं बहु सन्तुष्टः अस्मि। किन्तु मम एकः संशयः अस्ति यत् भवान् इदंप्रथमतया अत्र आगतवान् अस्ति। मम पुरतः एतावता धैर्येण वक्तुं भवान् कथं समर्थः जातः ?" इति पृष्टवान्।

"इदानीम् उभयोः अधिकारविनिमयः जातः किल ? अहं स्वामिपक्षे अस्मि। एवं हि सति कथं भयं स्यात् ?" इति पृष्टवान् केशवः।

तस्य अभिप्रायं ज्ञातुं राजा न शक्तवान्। अतः – "अधिकारविनिमयः नाम किं भोः ? किञ्चित् विवृणोतु" इति पृष्टवान् राजा।

केशवः प्रत्यागत्य प्रवृत्तं वृत्तान्तं नटेशं निवेदितवान्, बहुमानं प्रदर्शितवान् च। एतत् सर्वं दृष्ट्वा नटेशः उग्रक्रोधेन "किमिदं भोः ? मम समीपे कार्यं करोति इति कारणेन महान् पण्डितः जातः इति चिन्तयति वा ? इतः परं भवतः सेवां न इच्छामि। इदानीम् एव निर्गच्छतु" इति निन्दितवान्।

नटेशस्य तादृशः क्रोधः सकारणम् आसीत्। एतावत्पर्यन्तं महाराजः नटेशं विना अन्यं कमपि न श्लाघितवान् आसीत्। इदानीं महाराजेन कृतां केशवस्य प्रशंसां दृष्ट्वा सः महतीम् असूयाम् प्राप्तवान्।

केशवः नटेशस्य पादयोः उपरि पतित्वा दीनभावेन – "इतःपरं भवतः आज्ञां विना

कुत्रापि अहं किञ्चिदपि न वदामि। कृपया अत्रैव स्थातुम् अनुमतिं ददातु" इति प्रार्थितवान्।

किञ्चित्कालानन्तरं नटेशः शान्तः भूत्वा "मम आज्ञां विना अन्यस्य पुरतः मुखं न उद्घाटयतु। यदि मम वचनविरुद्धम् आचरति तर्हि इतः निष्कासनम् एव। जागरूको भवतु" इति उक्तवान्।



परेद्युः अपि नटेशः अस्वस्थः एव आसीत्। तस्मिन् दिने सः अन्यम् अल्पमतिं सेवकं राजभवनं प्रेषितवान्। तथा 'अद्यापि आगन्तुं न शक्नोमि' इति सूचितवान्। महाराजः तं सेवकं केशवविचारम् पृष्टवान्। तं विचारं सेवकद्वारा ज्ञातवतः नटेशस्य मात्सर्यं पूर्वापेक्षया अधिकं जातम्।

एवंरीत्या चत्वारि दिनानि व्यतीतानि। तदा नटेशः किञ्चिदिव स्वस्थः जातः। सः राजसमीपं गतवान्। महाराजः तस्य अस्वास्थ्यस्य विचारं किञ्चिदपि न विचार्य- "केशवः कुत्र गतवान्?" इति पृष्टवान्।

तदा नटेशः "प्रभो, उत्कृष्टः चन्दनवृक्षः एव भवतः पुरतः अस्ति। तं त्यक्त्वा स्वशरीरे यः चन्दनलेपनं करोति तस्य चिन्तनं करोति किल? किम् एतत् उचितम्?" इति महाराजं जागरयन् इव उक्तवान्।

अत्र नटेशः आत्मनः चन्दनवृक्षसादृश्यं दत्त्वा, केशवः चन्दनवृक्षगन्धग्राहकः अत्यन्तसामान्यमनुष्यः इति अभिप्रायं प्रकटितवान्।

नटेशस्य वचनं श्रुत्वा महाराजः आश्चर्यं प्रकटयन्- "मनुष्यस्य गन्धग्रहणगुणेन एव चन्दनवृक्षस्य प्राशस्त्यं भवति किल? अस्वस्थः भवान् मां द्रष्टुम् अद्य एव किमर्थम् आगतवान्?" इति पृष्टवान्।

तदा नटेशः किमपि अनुक्त्वा महाराजस्य अनुमतिं प्राप्य गृहं प्रत्यागतवान्। गृहागमनसमनन्तरम् एव केशवम् आहूय "अद्यावधि अहं भवतः प्रतिभाशक्तिं न लक्षितवान्। इतः परं भवन्तं मत्समानं कर्तुं प्रयत्नं करोमि। एतेषु दिनेषु मत्कारणतः भवतः यत् दुःखं जातं, तदर्थं मां क्षाम्यतु" इति उक्तवान्।

वेतालः एवं कथां समाप्य-"अत्र एकः संशयः मां बाधते। महाकविः नटेशः स्वीयं सेवकं क्षमां याचितवान्। कियत् अगौरवकरम् एतत्! अत्र एकः यथार्थविचारः अस्ति यत् महाराजेन कृतं केशवविषयकं श्लाघनं दृष्ट्वा नटेशे असूया उत्पन्ना इति। किन्तु एतं विषयं केवलं नटेशः जानाति, केशवः च। तृतीयः कोऽपि न जानाति। यः कोऽपि चोरः वा नीचः वा स्वीयचौर्यं नीचगुणं वा अन्यः जानाति चेत्, तदा लज्जां भयं च अनुभवन् परितापं प्राप्नोति। कोऽपि न जानाति चेत् सः लज्जितः नैव भवति। एवं हि सति महाकविः नटेशः स्वीयं असूयागुणम् अङ्गीकुर्वन् इव, सेवकं क्षमां याचितवान् इति एतत् अवमानास्पदं खलु? महाराजः नटेशस्य असूयास्वभावं ज्ञातवान् इति सूचना तस्य वचनेषु न दृश्यते। तर्हि केन कारणेन नटेशः क्षमायाचनं कृतवान्? एतस्य सन्देहस्य समाधानं भवान् जानन् अपि न वदति चेत् ..वतः शिरः सहस्रधा छिन्नं भवति" इति उक्तवान्।

तदा त्रिविक्रमः एवंरीत्या उत्तरं दत्तवान्-"नटेशस्य असूयागुणं ज्ञातुं तृतीयस्य अवकाशः एव नास्ति इति वचनम् असमीचीनम्। तस्य अस्वास्थ्यवार्तां वक्तुं द्वितीयदिने यदा अन्यः सेवकः आगतवान्, केशवः न आगतवान्, तदा एव महाराजः तं विचारं ज्ञातवान्। तेन कारणेन एव यदा नटेशः चन्दनवृक्षसादृश्यं चन्दनगन्धग्राहकस्य सादृश्यं च उक्तवान् तदा सः स्वस्थः अस्ति इति जानन् अपि महाराजः सः अस्वस्थः एव अस्ति इति उक्तवान्। यस्य मनसि असूया अस्ति सः अस्वस्थः इति तस्य वचनस्य अभिप्रायः। एतं विचारं ज्ञात्वा एव नटेशः सेवकस्य पुरतः क्षमां प्रार्थितवान्" इति।

एवंरीत्या यदा महाराजस्य मौनभङ्गः जातः तदा शवसहितः वेतालः अदृश्यः भूत्वा पुनः वृक्षस्य शाखाम् अवलम्बितवान्।






# शापविमुक्तिः

प्राचीनकाले चन्द्रमुखः नाम गन्धर्वः भूलोकम् आगत्य अरण्येषु प्रकृतिसौन्दर्यम् आस्वादयन् अटन् आसीत्। तदा अजागरूकतया अकस्मात् कस्यचित् मुनेः कमण्डलुं सः पातितवान्। तेन शब्देन तस्य मुनेः तपसः भङ्गः अभवत्। मुनिः कोपेन चन्द्रमुखं पश्यन्- "अये गर्वेण अन्ध! गन्धर्व! कमण्डलुं पातयन् मम तपोभङ्गं कृतवान् किल? अतः भवान् ब्रह्मराक्षसः भवतु। नैमिषारण्ये भवतः वसतिः भवतु" इति शापं दत्तवान्।

एतेन भयङ्करशापेन चन्द्रमुखः अतीव दुःखितः। सः मुनेः पादयोः पतित्वा साष्टाङ्गं नमस्कारं कुर्वन् दीनतया शापविमोचनं प्रार्थितवान्। एतेन शान्तः मुनिः- "भवान् अरण्यमार्गेण सञ्चरतः जनान् दृष्ट्वा भयङ्करम् आक्रोशनं करोतु। तत् श्रुत्वा यः मरणं प्राप्नोति तं खादन् भवान् जीवतु। यः भवतः आक्रोशनं श्रुत्वा अपि मरणं न प्राप्नोति तेनैव भवतः शापविमोचनं भविष्यति" इति उक्त्वा ततः गतवान्।

अनन्तरक्षणे चन्द्रमुखः ब्रह्मराक्षसरूपं प्राप्य नैमिषारण्यं गतवान्। मार्गपार्श्वे स्थितम् एकं वटवृक्षम् आश्रित्य स्थितवान् च।

दिनद्वयम् अतीतम्। ब्रह्मराक्षसं बुभुक्षा तीव्रं बाधते। तत्सन्दर्भे तेन मार्गेण कश्चन पुरुषः आगतवान्। ब्रह्मराक्षसः आक्रोशनं कृतवान्। तेन महाशब्देन भीतः मनुष्यः तत्रैव पतितवान्, मरणं प्राप्तवान् च। तं खादित्वा ब्रह्मराक्षसः बुभुक्षां दूरीकृतवान्।

किन्तु एतदनन्तरं ब्रह्मराक्षसस्य निवासः जनैः ज्ञातः। अतः जनाः तेन मार्गेण सञ्चारम् एव परित्यक्तवन्तः। तेन ब्रह्मराक्षसः अन्यमार्गपार्श्वे स्थितम् अन्यं वटवृक्षम् आश्रितवान्।

अत्रापि आहारत्वेन द्वित्राः एव लब्धाः। यावत् ब्रह्मराक्षसः द्वित्रान् मारितवान् तावता जनाः तस्य निवासं ज्ञातवन्तः एव। अतः अत्रापि जनाः सञ्चारं त्यक्तवन्तः। पुनः ब्रह्मराक्षसस्य आहारसम्पादने समस्या उत्पन्ना।

'इतःपरम् एतत् स्थानं त्यक्त्वा अन्यत्र गन्तव्यं भविष्यति'' इति चिन्तयन् आसीत् ब्रह्मराक्षसः। तदा मध्याह्नसमयः। कठोरे आतपे मन्दम् आगच्छन् कश्चन पुरुषः तेन दृष्टः।

ब्रह्मराक्षसः आनन्देन द्विगुणितेन उत्साहेन च भयङ्करं गर्जनं कृतवान्। किन्तु सः पुरुषः एकदृष्ट्या मार्गं पश्यन् अग्रे गच्छन् आसीत्। राक्षसगर्जनेन पुरुषस्य उपरि कोऽपि परिणामः एव न जातः।

मुनेः वचनानुसारं चन्द्रमुखस्य ब्रह्मराक्षसत्वम् अपगतम्। शापविमुक्तः सः पुनरपि गन्धर्वरूपं प्राप्तवान्। गन्धर्वः चन्द्रमुखः पथिकस्य पुरतः गत्वा कृतज्ञतां प्रकटयन् प्रवृत्तं सर्वं निवेद्य 'किमपि साहाय्यं पृच्छतु' इति उक्तवान्।

तदा सः पथिकः चन्द्रमुखम् आश्चर्येण पश्यन् उक्तवान् ''अहं जन्मना बधिरः! भवता किम् उक्तम् इति न श्रुतवान्। दूरतः उक्तं न शृणोमि। कृपया समीपम् आगत्य कर्णे एव वदतु'' इति।

'महतः आक्रोशनस्य अनन्तरम् अपि एषः कथं जीवितः ?' इति चन्द्रमुखः इदानीं ज्ञातवान्। आत्मनः शापविमोचनार्थं तस्य जन्मबधिरत्वम् एव कारणम् इत्येतत् ज्ञात्वा हसन् सः तस्मै श्रवणशक्तिम् अनुगृहीतवान्। अनन्तरं पुनरपि प्रवृत्तं सर्वं निवेदितवान्।

सः पथिकःकृतज्ञतापूर्वकम् उक्तवान्- ''मम बधिरताकारणतः भवतः शापविमोचनं जातम्। तेन च मया श्रवणशक्तिः सम्पादिता। उभयोः अपि अदृष्टात् एव एवं प्रवृत्तम्'' इति।

'आम्' इति शिरः चालयन् गन्धर्वः चन्द्रमुखः स्वलोकं गतवान्।






अस्माकं देवालयाः

# मीनाक्षीमन्दिरम्

पूर्वं कदाचित् देवेन्द्रः भूलोके मनोहरे वने सञ्चरन् प्रशान्ते कस्मिंश्चित् स्थले जगदीश्वरस्य ध्यानार्थम् उपविष्टवान्। किञ्चित्कालानन्तरं स्वनगरं गतवान् च। इन्द्रस्य आवासेन तत् स्थलं पवित्रं जातम्।

केषाञ्चित् दिनानाम् अनन्तरं कश्चित् राजा मृगयार्थं वनम् आगतः, तत् स्थलं प्रति आगतवान्। तदा तस्य मनसि मृगयोत्साहः क्षीणः अभवत्। मनः शान्ततया देवभक्त्या च पूर्णम्। 'स्वराजधानी अत्र आनेतव्या' इति सः महाराजः चिन्तितवान्।





तस्यां रात्रौ महाराजः स्वप्ने तत्-स्थाने शिवेन पात्यमानान् मधुबिन्धून् दृष्टवान्। अपरस्मिन् एव दिने राजा स्वराजधानीं तत्र आनीतवान्। एवं नूतनतया सिद्धं तत् नगरं मधुरापुर-नाम्ना प्रसिद्धम् अभवत्।



अल्पे एव काले महाराजस्य पुत्री सञ्जाता। अपूर्वसुन्दर्याः तस्याः बालायाः नेत्रे मीनयोः नेत्रे इव आस्ताम्। अतः तस्याः नाम मीनाक्षी इति निश्चितम्। सा महाराजस्य अद्वितीया पुत्री।

राजकुमारी मीनाक्षी शीघ्रम् एव राजोचितां सकलविद्याम् अधीतवती। यदा सा प्राप्तवयस्का जाता तदा राजा तां सिंहासने उपवेशितवान्। पितुः मरणानन्तरं मीनाक्षी समर्थतया राज्य-भारं निर्वहन्ती प्रजाः पुत्रान् इव पालितवती।






तस्याः उत्कर्षम् असहमानाः अन्ये राजानः पूर्वम् उपहसन्ति स्म। इदानीं ते एव तस्याः शक्तिं सामर्थ्यं च दृष्ट्वा स्तुतिं कृतवन्तः। किन्तु असूयापराः केचन सम्भूय मधुरायाः उपरि आक्रमणं कृतवन्तः।

महाराज्ञी मीनाक्षी स्वयं रणरङ्गं प्रविश्य सेनानायकत्वं निरूढवती। वायुवेगेन रणरङ्गे सर्वत्र सञ्चरन्ती शत्रुमर्दनं कृतवती। तस्याः युद्धकौशलस्य पुरतः शत्रवः हतवीर्याः सञ्जाताः।





पराजितां शत्रुसेनां राज्यसीमा-पर्यन्तम् अनुसृत्य गत्वा मीनाक्षी-देवी प्रत्यागच्छन्ती आसीत्। तदा मार्गमध्ये अरण्ये सा अपरिचितं पुरुषं दृष्टवती। पुरुषस्य प्रभया आश्चर्य-चकिता सा अश्वं तत्रैव स्थगितवती।

तत्र तया दृष्टः साक्षात् ईश्वरः एव। शिवदर्शनेन, सा आत्मनः पार्वतीस्वरूपं स्मृतवती। अनन्तरम् अचिरात् एव मीनाक्षीसुन्दरेश्वरयोः विवाहः महता वैभवेन सम्पन्नः।





'युवराज्ञी पार्वत्याः अवतारांश-भूता' इति ज्ञात्वा नागरिकाः तस्याः पूजां कर्तुम् आरब्धवन्तः। यदा सा भौतिकशरीरं त्यक्तवती तदा तस्याः मूर्तिं निर्माय तां पूजितवन्तः। आलयेषु मीनाक्षीदेव्याः विग्रहेण सह सुन्दरेश्वर-मूर्तिम् अपि स्थापितवन्तः।

मधुरायाः मीनाक्षीमन्दिरम् बहु विशालम्। उन्नतैः गोपुरैः, सहस्र-स्तम्भयुतेन मण्डपेन, अपूर्वशिल्पैः च विभूषितम् एतत् मन्दिरं सुप्रसिद्धम्।





न केवलम् अस्माकं देशे, अपि तु प्रपञ्चे एव प्राचीनेषु देवालयेषु एतत् अन्यतमम्। नगरस्य मध्ये मीनाक्षी-मन्दिरम् अस्ति। देशस्य सर्वकोणेभ्यः जनाः आवर्षं मधुरायाः मीनाक्षीं द्रष्टुम् आगच्छन्ति। भक्तानां भक्ति-गीतैः प्रार्थनाभिः च मन्दिरं सदा प्रतिध्वनितं तिष्ठति।



# परिवर्तनम्

सोदरीपुरम् इति कश्चन ग्रामः। तत्र पुरा कदाचित् गोविन्दनाथः इति कश्चन धनिकः गृहस्थः वसति स्म। सः सज्जनः जनप्रियः च। तस्य पत्नी आनन्दवती। सा तु स्वीयव्यवहारेण दुर्वचनैः च अन्येषां सर्वेषाम् आनन्दं नाशयति। तस्याः एतादृशमूर्खस्वभावेन सर्वे तां कुत्सितदृष्ट्या पश्यन्ति।

गच्छति काले गोविन्दनाथस्य ज्येष्ठा पुत्री विवाहवयस्का जाता। वरान्वेषणं प्रवृत्तम्। किन्तु बहुप्रयत्नानन्तरम् अपि अनुरूपः वरः नैव लब्धः। वरदक्षिणाम् उपायनादिकं च यथेच्छं दातुं गोविन्दनाथः समर्थः। तथापि न कोऽपि तरुणः तस्य सम्बन्धम् इच्छति। एतत् दृष्ट्वा आनन्दवती अतीव दुःखिता। एकस्याः पुत्र्याः विवाहविषये एव एतावान् क्लेशः! उत्तरत्र अन्यपुत्रीणां का गतिः?

आनन्दवती जानाति यत् स्वीयपतिः गोविन्दनाथः ग्रामे जनप्रियः आदरणीयः च अस्ति इति। 'एवं तर्हि मम उपरि एव ग्रामीणानां महती असूया। सर्वे मां कुत्सित-भावेन पश्यन्ति। यदि पतिवत् अहम् अपि ग्रामे साधुव्यवहारं करोमि, तर्हि जनानां क्रोधः अपगच्छति। उत्तमा स्त्री इति मम ख्यातिः लभ्यते। अनन्तरं जटिला पुत्र्याः विवाह-समस्या सुकररूपेण परिह्रियते।'

एवं पर्यालोच्य आनन्दवती एकदा पतिम् "अस्माकं ग्रामे सर्वत्र भवतः कीर्तिः व्याप्ता अस्ति। अहम् अपि तादृशीम् उत्तमकीर्तिं प्राप्तुम् इच्छामि। तदर्थं किं करणीयम्?" इति पृष्टवती।

एतेन गोविन्दनाथस्य महान् प्रमोदः अभवत्। विवाहकालतः आरभ्य तस्याः मुखात् निःसृतानि कर्कशवचनानि सर्वदा शृण्वन् सः मानसिकवेदनाम् अनुभवति स्म।

"भामहः"



अतः इदानीम् गोविन्दनाथः महता आनन्देन "बहुकालानन्तरम् अस्माकं भाग्यवशात् दैवानुग्रहेण च भवत्याः मनसि सद्बुद्धिः जाता अस्ति। एकं विषयं भवती सम्यक् स्मरतु यत् जनानां मध्ये स्नेहव्यवहारेण परोपकारेण च उत्तमा कीर्तिः निश्चयेन लभ्यते" इति उक्तवान्।

पति व्यवहारज्ञः चतुरः च इति सा जानाति। अतः इदानीं सा पत्युः वचनानुसारेण समीचीनं व्यवहारम् आरब्धवती। प्रातिवेशिकजनैः सह, कर्मकरैः सह, बालैः सह च तस्याः व्यवहारः सौम्यः जातः। यथावकाशं परोपकारम् अपि करोति।

एवंरीत्या कानिचन दिनानि अतीतानि। तदा स्वीयविषये जनानाम् अभिप्रायः कीदृशः अस्ति इति ज्ञातुम् आनन्दवत्याः कुतूहलं जातम्। प्रप्रथमं प्रातिवेशिकगृहिणीनां अभिप्रायं ज्ञातुं सा प्रयत्नपरा अभवत्। एतेषु दिनेषु सा अनेकवारं प्रातिवेशिकजनानां साहाय्यं कृतवती खलु?

आनन्दवत्याः गृहस्य समीपे एव मीनाक्ष्याः गृहम्। मध्याह्नानन्तरं परितः वर्तमानानां अनेकगृहाणां गृहिण्यः मीनाक्ष्याः गृहस्य वेदिकायां सम्मिलन्ति। तत्र ताः प्रतिदिनं परस्परं विचारविनिमयं कुर्वन्ति। अद्य तासां सम्भाषणमध्ये आनन्दवत्याः विचारः अपि अन्तर्गतः आसीत्। आनन्दवती भित्तेः अन्यस्मिन् पार्श्वे स्थित्वा शृण्वती आसीत्।

"इदानींतनदिनेषु एतस्याः आनन्दवत्याः व्यवहारे महत् परिवर्तनं जातं भोः! इतः पूर्वं सा कस्य अपि अत्यल्पम् उपकारम् अपि न कृतवती। इदानीं किं जातम्? पूर्वेद्युः पाकसमये मम हस्तस्य उपरि अत्युष्णा यवागूः पतिताः। तदा एषा आनन्दवती आगत्य मम हस्ते औषधं लेपितवती। अनन्तरं अवशिष्टं मम पाककार्यं सा स्वयं कृत्वा गतवती" इति एका गृहिणी उक्तवती।

ताम् अनुसृत्य अन्या गृहिणी "ततः अपि किञ्चित् अधिकं विचित्रं शृण्वन्तु भोः। ह्यः मम बालाः तस्याः गृहस्य पुरतः क्रीडन्तः

महान्तं कोलाहलं कृतवन्तः। तथापि सा तूष्णीम् एव आसीत्। इतःपूर्वं सा हस्ते दण्डं गृहीत्वा गर्जनं कुर्वती महाकाली इव भवति स्म खलु? ह्यः तु नूनम् अपूर्वम् अद्भुतं सञ्जातम्" इति उक्तवती।

एवंरीत्या किञ्चित्कालं यावत् सम्भाषणं प्रवृत्तम्। तासां मध्ये स्थिता एका वृद्धा मन्दस्वरेण "पश्यन्तु भोः, एतत् सर्वं दृष्ट्वा मम तु एवं प्रतिभाति यत् आनन्दवती यत् किमपि स्वार्थं साधयितुम् एवंरीत्या आचरति इति। अस्माभिः जागरूकतया भवितव्यम्। तस्याः पुत्र्याः विवाहसम्बन्धिव्यवहारः स्थगितः एव अस्ति। किञ्च तस्याः कृषिक्षेत्राणाम् आयः न्यूनं जातः इति श्रूयते" इति उक्तवती।

एतत्सर्वं श्रुत्वा आनन्दवती स्तम्भिता अभवत्। सत्कीर्तिं सम्पादयितुम् एतावत्पर्यन्तं बहुप्रकारेण प्रातिवेशिकानां सेवां कृतवती। तत् सर्वं व्यर्थं जातम् इति सा सङ्कटम् अनुभूतवती।

एवंरीत्या प्रातिवेशिकानाम् अभिप्रायं ज्ञातवत्याः तस्याः मनसि 'कर्मकराः बालाः च किं वदेयुः' इति ज्ञातुम् इच्छा उत्पन्ना।

काकतालीयन्यायेन तस्मिन् एव दिने तस्याः गृहस्य पृष्ठभागे गोष्ठस्य समीपे कर्मकरी गङ्गा तस्याः पतिः रङ्गः च सम्भाषणतत्परौ आस्ताम्। तयोः वार्तालापविषयः आनन्दवती-



विचारः एव आसीत्।

कर्मकरी गङ्गा उक्तवती- "ह्यः काचकपात्रम् अजागरूकतया अधः पातितवती। पूर्वं एतादृशसन्दर्भेषु एषा सिंहिणीवत् गर्जनं कुर्वती भर्त्सयति स्म। पूर्वेद्युः तथा किमपि उक्त्वा क्षमागुणं प्रदर्शयन्ती तूष्णीं स्थितवती। कथं एवं परिवर्तनम्! किम् अत्र कारणम्?" इति।

रङ्गः किञ्चित् आलोच्य उपरि अधः पश्यन्- "अहम् अपि न जानामि भोः! वृष्टेः पूर्वं मेघाः शान्ताः दर्शनीयाः च भवन्ति खलु! सप्ताहतः आरभ्य अहम् अपि द्वित्रान् दोषान् कृतवान्। तदा अपि एवमेव सा किमपि न उक्तवती। मुखे कोपम् अपि न प्रदर्शितवती। एतत् सर्वं दृष्ट्वा मनसि भीतिः उत्पन्ना अस्ति।

कस्मिन् क्षणे सा आक्रमणं करोति इति न ज्ञायते। एतत् गृहं परित्यज्य अन्यत्र उद्योगस्य अन्वेषणम् एव वरम् इति मन्ये'' इति उक्तवान्।

आनन्दवती स्वपुत्राणां व्यवहारे अपि परिवर्तनं लक्षितवती। इतःपूर्वं येन केनापि व्याजेन सा पुत्राणां व्यवहारं निन्दति स्म, भर्त्सयति स्म। इदानीं तु किमपि न वदति, गम्भीरस्वभावेन तूष्णीं तिष्ठति। एतत् दृष्ट्वा उत्तरत्र या कापि विपत्तिः आपतेत् इति शङ्कया ते सर्वे किञ्चिद्दूरे एव अटन्ति। तस्याः समीपं कोऽपि न आगच्छति।

सत्कीर्तिं सम्पादयितुम् कृताः प्रयत्नाः सर्वे किमर्थम् एवं विपरिणताः? इति सा न ज्ञातवती। सा पुनः पतिं गोविन्दनाथं सर्वविचारान् निवेद्य खेदं प्रकटितवती।

तस्याः वचनानि श्रुत्वा गोविन्दनाथः ''भवत्याः सद्व्यवहाराणां फलं अग्रे कदाचित् लभ्यते एव। सकाले कीर्तिः स्वयं सिद्ध्यति। तस्याः अन्वेषणम् अस्माभिः कदापि न करणीयम्। किञ्च अस्माभिः कृतस्य सर्वस्य कार्यस्य फलापेक्षा अनुचिता एव। तेन आशाभङ्गः एव भवेत्। अन्यच्च एकं विषयं सम्यक् जानातु उत्तमव्यवहारः कदापि प्रतिफलं न अपेक्षते'' इति उक्तवान्।

पत्युः वचनं श्रुत्वा आनन्दवती स्वीयमूर्खतां ज्ञात्वा लज्जिता अभवत्। तदारभ्य आत्मानं प्रति अन्ये किं वदेयुः इति ज्ञातुं या इच्छा पूर्वं आसीत् तां त्यक्तवती। यथाशक्ति अन्येषां साहाय्यं कुर्वती उत्तमव्यवहारस्य अभ्यासं कृतवती। तेन तस्याः पूर्वस्वभावं जनाः विस्मृतवन्तः। गच्छति काले, तस्याः विषये तेषां संशयाः स्वयम् उन्मूलिताः। इदानीं ग्रामस्थाः आनन्दवती गोविन्दनाथस्य अनुरूपा पत्नी इति श्लाघितुम् आरब्धवन्तः।

अनन्तरं शीघ्रम् एव तयोः पुत्र्याः कृते एकः उत्तमः वरः लब्धः। विवाहः अपि सवैभवं सञ्जातः।






नारदः सर्वलोकसञ्चारसमर्थः। सः जलन्धरस्य समीपं गत्वा- "भोः जलन्धर, शिवः विष्णुः च मानससरोवरे स्तः" इति उक्तवान्।

तां वार्तां श्रुत्वा जलन्धरः सद्यः एव मानससरोवरं गत्वा, शिवस्य विष्णोः च अन्वेषणम् आरब्धवान्। तस्य अन्वेषणप्रयत्नं दृष्ट्वा अन्यमार्गेण शिवः विष्णुः च जलात् निर्गत्य बहिः आगतवन्तौ। अनन्तरं जलन्धरं प्रतीक्षमाणौ तीरे एकत्र स्थितवन्तौ। तस्मिन् समये शिवस्य हस्ते विष्णोः चक्रम् आसीत्। एवं विष्णोः हस्ते शिवस्य त्रिशूलम्।

मानससरोवरे सर्वत्र अन्विष्य, शिवं वा विष्णुं वा अदृष्ट्वा जलन्धरः तीरम् आगतवान्। तत्र तौ तेन दृष्टौ। तयोः दर्शनसमनन्तरम् एव जलन्धरः सन्तोषेण युद्धार्थं सन्नद्धः अभवत्। तौ द्वौ अपि सम्भूय जलन्धरस्य शरीरं द्विधा कृत्वा तं हतवन्तौ। जलन्धरस्य मरणं दृष्ट्वा त्रयः लोकाः अपि सन्तुष्टाः। देवाः पुष्पवृष्टिं कृतवन्तः।

कश्यपप्रजापतेः अनेके पुत्राः आसन्। तेषु विप्रजित् नामकः दानवः अन्यतमः। तस्य च दानवस्य पुत्रः दम्भः। दम्भः महान् विष्णुभक्तः। सः सर्वदा विष्णुपूजानिरतः एव कालं यापयति। तस्य दम्भस्य बहुकालपर्यन्तं पुत्रप्राप्तिः न अभवत्। अतः सः बदरिकाश्रमं गत्वा, तत्र एकेन एव पादेन स्थित्वा, विष्णुध्यानपरः दीर्घकालं यावत् घोरं तपः

१०. शङ्खचूडस्य शासनम्.



आचरितवान्।

अन्ते विष्णुः दम्भस्य पुरतः प्रत्यक्षं भूत्वा "किम् इच्छति भवान् ?" इति पृष्टवान्।

"प्रभो, महाविष्णो! अहं बलशौर्यपराक्रमैः भवत्समानं, लोकत्रयम् अपि जेतुं समर्थं, पराजयरहितं, भवतः विषये भक्तिभरितं कुमारम् इच्छामि। तादृशं पुत्रम् अनुगृह्णातु" इति दम्भः विष्णुं प्रार्थितवान्।

दम्भस्य प्रार्थनां श्रुत्वा 'तथास्तु' इति उक्त्वा विष्णुः अदृश्यतां गतः। दम्भः गृहं प्रत्यागत्य विष्णोः शुभवार्तां पत्नीं कथितवान्। अनन्तरं दम्भस्य पत्नी गर्भवती भूत्वा शुभे मुहूर्ते एकं पुत्रं प्रसूतवती।

मातापितरौ तं कुमारं शङ्खचूडनाम्ना आहूय महत्या प्रीत्या पालितवन्तौ।

गच्छति काले यथाक्रमं शङ्खचूडः शुक्राचार्यस्य शिष्यः भूत्वा समस्तविद्याः अधीतवान्। यदा सः प्रौढः जातः तदा विन्ध्यपर्वतं गत्वा ब्रह्माणम् उद्दिश्य श्रद्धया तीक्ष्णं तपः तप्तवान्। एतेन प्रसन्नः ब्रह्मा तस्य पुरतः प्रत्यक्षीभूय "तात शङ्खचूड! भवतः तपसा अहं प्रसन्नः अस्मि। अपेक्षितं वरं पृच्छतु" इति उक्तवान्।

"प्रभो, अहं देव-मानव-नाग-राक्षसादि-गणान् जेतुम् अपेक्षितं बलपराक्रमादिकम् इच्छामि। यथा अहं लोकत्रयस्य आधिपत्यं प्राप्नुयां, सकलभोगादिकम् अनुभवितुं च शक्नुयां, तादृशवरेण माम् अनुगृह्णातु" इति उक्तवान् शङ्खचूडः।

ब्रह्मदेवः तेन पृष्टं वरं तस्मै प्रदाय "तात! भवान् बदरिकाश्रमं गच्छतु। तत्र तुलसी नाम कन्या तपः आचरन्ती अस्ति। तां परिणीय भवान् सुखं जीवतु" इति उक्त्वा अदृश्यः अभवत्।

ब्रह्मणः सकाशात् वरम् प्राप्य शङ्खचूडः बदरिकाश्रमं गतवान्। तपसि मग्नां तुलसीं दृष्टवान् च। तस्य कन्यारत्नस्य दिव्यसौन्दर्यं दृष्ट्वा सः आकृष्टः। तां प्रति तस्य मनसि अनुरागः उत्पन्नः।

सः तस्याः समीपं गत्वा "भोः सुन्दरि!



भवती कुत्रत्या ? एतस्मिन् वने एकाकिनी भवती किमर्थं तपः आचरन्ती अस्ति ?" इति पृष्टवान्।

तुलसी अपि शङ्खचूडं दृष्ट्वा तस्य सौन्दर्येण सन्तुष्टा सती लज्जया- "अहं धर्मचूडनामकस्य महाराजस्य पुत्री। मम नाम तुलसी। महावीरं पतिरूपेण प्राप्य महापतिव्रता इति शाश्वतकीर्तिं प्राप्तुम् तपः आचरन्ती अस्मि। भवान् कः ?" इति पृष्टवती।

"अहं दम्भनामकस्य दानवराजस्य पुत्रः। शङ्खचूडः इति मम नाम। मया कृतेन तीव्रतपसा सन्तुष्टः ब्रह्मा मह्यं त्रिलोकाधिपत्यं वररूपेण अनुगृहीतवान्। अनन्तरं ब्रह्मा भवतीं परिणेतुम् उपदिष्टवान्। तस्य आदेशानुसारेण एव अहम् अत्र आगतवान्। अतः भवत्या अपेक्षितः पतिः अहम् एव इति जानातु। मम पत्नी भवतु" इति उक्तवान् शङ्खचूडः।

तौ द्वौ तदा एव गान्धर्वविधिना परिणीय पर्वतेषु नदीतीरेषु अरण्येषु च किञ्चित्कालपर्यन्तं विहारं कृतवन्तौ।

अनन्तरं शङ्खचूडः तया सह स्वीयं गृहं गतवान्। मातापितरौ दृष्ट्वा प्रवृत्तं वृत्तान्तं निवेदितवान्। एतया वार्तया सर्वे अपि सन्तोषम् अनुभूतवन्तः। अनन्तरं शुक्राचार्यस्य आज्ञानुसारेण दम्भः शङ्खचूडं सिंहासने उपवेशितवान्।

शङ्खचूडः जनकेन अर्पितं राज्यं शुक्राचार्यस्य सूचनानुसारेण समीचीनरीत्या परिपालयन् दानवराजश्रेष्ठः इति सत्कीर्तिं सम्पादितवान्।

एवंरीत्या तस्य राज्यपरिपालनसमये एकदा केचन दानवप्रमुखाः शुक्राचार्यः च तस्य समीपम् आगत्य- "भोः महाराज ! ब्रह्मा भवते अपूर्वान् वरान् अनुगृहीतवान् किल ? अस्माकं पूर्वजाः पूर्वं देवेन्द्रादिभिः बहुधा पीडिताः, वञ्चिताः च। तेषां सर्वेषां पीडनानां प्रतीकारः भवता इदानीं करणीयः। प्रप्रथमं भवान् सेनाभिः सह गत्वा स्वर्गम् आक्रम्य वशीकरोतु।

अनन्तरं किं करणीयम् इति चिन्तयामः'' इति तम् उद्बोधितवन्तः।

तेषां वचनानुसारेण एव कार्यं करणीयम् इति सः निश्चयं कृतवान्। 'दिग्विजयप्रस्थानार्थं शुभं मुहूर्तं दृष्ट्वा वदतु' इति शुक्राचार्यं प्रार्थितवान्। शुक्राचार्येण निर्णीते मुहूर्ते सः स्वीयसेनाभिः सह गत्वा स्वर्गलोकस्य आक्रमणं कृतवान्।

शङ्खचूडः स्वर्गस्य आक्रमणार्थम् आगच्छति इति वार्ता गुप्तचारमुखात् पूर्वम् एव ज्ञात्वा देवेन्द्रः षण्मुखं देवगणान् च आहूतवान्। अनन्तरं तैः सह स्वयम् अपि युद्धार्थं सन्नद्धः अभवत्।

देवगणदानवगणयोः मध्ये चत्वारिंशत् दिनानि यावत् अहर्निशं निरन्तररूपेण घोरं युद्धम् अभवत्। अन्ते देवगणीयाः अनेके पलायनपराः दृष्टाः। दानवेषु तु पूर्वापेक्षया अधिकतरः उत्साहः आवेशः च प्रतिक्षणं वर्धते स्म।

एतत्सर्वं दृष्ट्वा देवगणानां विजयः अशक्यः इति ज्ञात्वा देवेन्द्रः ब्रह्मणा शङ्खचूडाय प्रदत्तान् वरान् स्मृत्वा युद्धक्षेत्रात् प्रत्यागन्तुं देवगणीयान् आदिष्टवान्। अनन्तरं सः स्वयम् शङ्खचूडस्य समीपं गत्वा ''भोः शङ्खचूड ! भवान् कश्यपमहर्षेः गोत्रे उत्पन्नः। भवतः शौर्यं पराक्रमं च दृष्ट्वा



वयं सन्तुष्टाः। इतःपरं युद्धं मास्तु। भवान् एव लोकत्रयम् अपि पालयतु। वयं सर्वे भवतः साहाय्यं कुर्मः'' इति उक्तवान्।

शङ्खचूडः तस्य वचनम् अङ्गीकृत्य ''देवेन्द्र ! भवान् एव मम प्रतिनिधिरूपेण स्वर्गे स्थित्वा मम आज्ञानुसारेण शासनं करोतु'' इति उक्तवान्।

अनन्तरं शङ्खचूडः स्वीयं त्रिलोकाधिपत्यं सर्वत्र प्रकटीकृत्य स्वराजधानीं शोणितपुरं प्रत्यागतवान्। तत्रैव स्थित्वा लोकत्रयम् अपि पालयितुम् आरब्धवान्। देवेन्द्रादयः तस्य अनुचराः सन्तः तस्य आज्ञानुसारेण कार्याणि कुर्वन्तः आसन्।

किन्तु यज्ञयागादीनां कर्तारः इदानीम्

अपि देवेन्द्रादिदेवताभ्यः एव हविर्भागान् अर्पयन्ति स्म । तत् दृष्ट्वा शङ्खचूडः तान् हविर्भागान् दानवेभ्यः एव समर्पयन्तु इति मुनिजनान् ब्राह्मणान् च पीडयितुम् आरब्धवान् । तदर्थं शङ्खणूडस्य दानवभटाः तत्र तत्र अटन्तः ऋषिजनान् पीडयितुम् यज्ञयागादीन् नाशयितुं च आरब्धवन्तः ।

एतान् क्लेशान् सोढुम् असमर्थाः ऋषयः महाविष्णोः समीपं गत्वा "जगत्पालक ! शङ्खचूडस्य संहारं कृत्वा अस्मान् रक्षतु" इति प्रार्थितवन्तः ।

"शङ्खचूडः मम अंशतः एव जातः अस्ति । तस्य पत्नी तुलसी लक्ष्म्याः अंशतः जाता । अतः अहं शङ्खचूडं हन्तुम् असमर्थः अस्मि । भवन्तः शिवस्य समीपं गत्वा पृच्छन्तु" इति उक्तवान् विष्णुः ।

तदा सर्वे ऋषयः कैलासं गत्वा 'शङ्खचूडं हत्वा अस्मान् रक्षतु' इति शिवं प्रार्थितवन्तः । शिवः "अहं शङ्खचूडादिदानवान् सर्वान् संहृत्य भवतां क्लेशान् परिहरामि" इति अभयवचनं दत्त्वा तान् प्रेषितवान् ।

एतां वार्तां ज्ञात्वा नारदः शङ्खचूडस्य समीपं गत्वा "भोः शङ्खचूड ! भवतः हननं करोमि इति शिवः ऋषीणां पुरतः प्रतिज्ञातवान् अस्ति । सः रुद्रगणैः सह आगत्य अकस्मात् भवतः उपरि आक्रमणं कर्तुम् उद्युक्तः अस्ति । अतः भवान् तूष्णीं न तिष्ठतु । भवान् एव प्रथमं सेनासहितः गत्वा कैलासस्य उपरि आक्रमणं करोतु । तत्रैव शिवः यथा तटस्थः भवेत् तथा करोतु" इति सूचयित्वा ततः निर्गतवान् ।

शङ्खचूडः नारदस्य वचनानुसारेण कैलासस्य उपरि आक्रमणं कृतवान् । तत् दृष्ट्वा शिवः युद्धार्थं भद्रकालीं वीरभद्रगणान् कुमारगणान् च नन्दिद्वारा स्वसमीपं आनायितवान् । अनन्तरं शिवस्य आज्ञानुसारेण रुद्रगणानां दानवसेनायाः च मध्ये महत् युद्धम् आरब्धम् ।





# मन्त्रिणां कुतन्त्रम्

पूर्वं कस्यचित् महाराजस्य आस्थाने दश मन्त्रिणः आसन्। ते सर्वे धनपराः। स्वार्थसम्पादनार्थं ते कार्यं कुर्वन्ति स्म। प्रजानां हितसाधने तेषां न तात्पर्यम्। अतः शीघ्रम् एव राज्यपरिपालने अव्यवस्था उत्पन्ना।

एतस्य अवकाशस्य दुरुपयोगं स्वीकुर्वन् शत्रुराजः एतस्य राज्यस्य उपरि आक्रमणं कृतवान्। केचन मन्त्रिणः रहस्यरूपेण शत्रुसेनायाः साहाय्यं कृतवन्तः।

यदा पराजयः आसन्नः तदा एव महाराजः मन्त्रिणां वञ्चनां ज्ञातवान्। किन्तु काले अतीते किं वा कर्तुं शक्यते? असहायः सः पत्न्या, द्विवर्षीयेण पुत्रेण च सह दुर्गं परित्यज्य अश्वम् आरुह्य पलायनं कृतवान्।

अहोरात्रं प्रयाणानन्तरं ते बहु श्रान्ताः। अतः मरुभूमेः पार्श्वे शिलामयभूमौ प्रयाणं स्थगयित्वा स्थितवन्तः। पार्श्वस्थनद्याः जलं पीत्वा विश्रान्तिम् अनुभूतवन्तः।

किन्तु अत्रान्तरे अश्वानां खुरपुटध्वनिः तैः श्रुतः। किङ्कर्तव्यतामूढः महाराजःपत्नीं हस्तेन गृहीत्वा बलेन आकृष्यन् पुत्रं तत्रैव त्यक्त्वा गुल्मसमूहं प्र वि ष्ट वा न्। "आगन्तारः लुण्ठाकाः शत्रुसैनिकाः वा भवेयुः। ते शिशुं न पीडयेयुः एव। यदि शिशुं नयावः तर्हि सः रोदनादिना आवयोः रहस्यस्थितिं सूचयेत् एव" इति चिन्तितवान् आसीत् महाराजः।

किन्तु प्रवृत्तम् अन्यत् एव। तत्र आगताः लुण्ठाकाः एव। तेषां नायकः निर्जनस्थले स्थितं शिशुं दृष्ट्वा सन्तोषम् अनुभूतवान्। शिशुम् उन्नीय गतवान् च।

गुल्मसमूहात् बहिः आगतौ महाराजः तत्पत्नी च पुत्रम् अदृष्ट्वा दिग्भ्रान्तौ। तत्पत्नी तु उच्चैः रोदनं कर्तुम् आरब्धवती।

"अरेबिया कथा"



वशीकृतवान् ।

एवं पूर्वस्थितिः यदा प्राप्ता तदा पुत्रविरह-वेदनया सः पुनः तीव्रं पीडितः अभवत् । अतः पुत्रान्वेषणार्थं बहुविधप्रयत्नान् कृतवान् । सर्वदिक्षु सेवकान् प्रेषितवान् । किन्तु तेन किमपि प्रयोजनं न सिद्धम् ।

एवंस्थिते कदाचित् केचन वणिजः उष्ट्रैः मरुभूमिमार्गेण गच्छन्तः आसन् । तदा केचन लुण्ठाकाः तेषाम् उपरि आक्रमणं कृतवन्तः । उभयोः पक्षयोः मध्ये तीव्रं युद्धम् अभवत् । उभयपक्षे अपि केचन मृताः । तथापि अन्ते जयः वणिक्पक्षस्य एव । ते वणिजः अवशिष्टान् लुण्ठाकान् बद्ध्वा महाराजस्य पुरतः आनीतवन्तः ।

वणिजां बुद्धिमत्तां साहसं च ज्ञात्वा महाराजः बहु सन्तुष्टः । उपायनदानैः सः तान् सत्कृतवान् । चोरान् शूलम् आरोपयितुम् आदिष्टवान् च ।

यदा भटाः चोरान् वध्यस्थानं नेतुं प्रवृत्ताः तदा सहजतया महाराजस्य दृष्टिः कस्यचित् चोरयुवकस्य उपरि पतिता । सः चोरयुवकः पुष्टः सल्लक्षणोपेतः आकर्षकः च आसीत् । अतः सः युवकं स्वसमीपम् आहूय पृष्टवान्- "कः भवान् ? भवतः नाम किम् ?" इति ।

"अहम् एतेषां नायकः अस्मि । अजरुद्दीन् इति मम नाम" इति सधैर्यम्

तदा तां सान्त्वयन् महाराजः उक्तवान् "आवाम् इदानीं राज्यभ्रष्टौ । पुनः अद्वितीयः पुत्रोऽपि अदृश्यतां गतः । दैवो दुर्बलघातकः । 'पुत्रः यत्रकुत्रापि भवतु । सः सकुशलं जीवतु' इति प्रार्थनां विना किम् अन्यत् कर्तुं शक्येत इदानीम् । दुःखं शाश्वतिकं न किल ? कालान्तरे पुत्रः अस्माभिः पुनः प्राप्येत" इति ।

केषाञ्चित् दिनानाम् अनन्तरं तौ दम्पती बन्धुराजस्य समीपं गतवन्तौ । तस्य बन्धुराजस्य समीपे अपि सैन्यं पर्याप्तमात्रेण अस्ति । तस्य साहाय्येन एषः महाराजः शत्रूणाम् उपरि अकस्मात् आक्रमणं कृतवान् । घोरं युद्धं कृत्वा शत्रुसेनां पराजित्य स्वदुर्गं स्वराज्यं च

उक्तवान् सः युवकः।

"मम आस्थाने भवते उद्योगं दास्यामि चेत् भवान् तत् कर्तुं सिद्धः वा? सद्व्यवहारेण जीवितुम् इच्छति वा भवान्?" इति पृष्टवान् महाराजः।

"प्रभो! मम पितुः आग्रहेण मया एषा वृत्तिः आश्रिता, न तु स्वेच्छया। अतः उद्योगः दत्तः चेत् निश्चयेन करोमि एव। किन्तु तादृशं भाग्यं मम स्यात् वा?" इति खेदेन पृष्टवान् अजरुद्दीनः।



इदानीम् अजरुद्दीनः महाराजस्य आस्थाने उद्योगी। स्वसामर्थ्येन सः शीघ्रम् एव महाराजस्य विशेषानुग्रहं सम्पादितवान्। कर्तव्यपालनया सर्वेषाम् आदर्शपात्रम् अभवत्। एवं कालक्रमशः महाराजस्य विश्वासं सम्पादयन् सः कोषाधिकारिपदवीम् अपि सम्पादितवान्।

एतावत्पर्यन्तं इतरे मन्त्रिणः स्वेच्छया कोषागारस्य धनं जलम् इव व्ययीकुर्वन्तः आसन्। इदानीं अजरुद्दीनस्य दक्षताकारणतः परिस्थितिः एवं जाता आसीत् यत् तस्य अनुमतिं विना एकदीनारस्य अपि स्वीकारः अशक्यः एव इति। अतः इदानीं इतरमन्त्रिणां महान् क्लेशः। ते सर्वे एकत्रीभूय निश्चयं कृतवन्तः- 'एषः अजरुद्दीनः अस्माकं मार्गे कण्टकम् इव आचरन् अस्ति। अतः एषः केनापि उपायेन निवारणीयः' इति।

महाराजस्य अनुपस्थितेः समयं प्रतीक्षमाणाः मन्त्रिणः कदाचित् अजरुद्दीनं भोजनकूटार्थम् आहूतवन्तः। भोजनकूटस्य अन्ते सम्यक् द्राक्षारसं पायितवन्तः। एतेन मदमत्तः अजरुद्दीनः विसंज्ञः अभवत्। तदा ते मन्त्रिणः तं नीत्वा अन्तःपुरे महाराजस्य शय्यायां शायितवन्तः। एतत्कार्यं तथा जागरूकतया कृतवन्तः यत् एतेषां तन्त्रं कोऽपि सेवकः न ज्ञातवान्।

मध्यरात्रे महाराजः शयनगृहं प्रविष्टवान्। 'शय्यायाम् अन्यः कोऽपि सुप्तः' इति ज्ञात्वा सः कोपविष्टः अभवत्। सेवकम् आहूय सुप्तः कः इति परीक्षितुम् आदिष्टवान्।

"कश्चित् आकण्ठं पीत्वा विसंज्ञः सन्



पतितवान् अस्ति" इति उक्तवान् सेवकः।

तदा 'किं प्रचलति ?' इति द्रष्टुं रहसि स्थिताः मन्त्रिणः समीपम् आगत्य कुहकस्वरेण उक्तवन्तः- "किम् एतत् ? महाप्रभोः शय्यायां अनामधेयः कश्चित् शयनं करोति ! इतोऽपि अपमाननं किमपि स्यात् वा ?" इति।

"एतं नीचं शूलम् आरोपयन्तु" इति आज्ञापितवान् महाराजः।

"एषः एव उचितः दण्डः" इति उक्तवान् प्रमुखः मन्त्री।

"सत्यं, सत्यम्" इति इतरे मन्त्रिणः शिरः चालितवन्तः।

अजरुद्दीनः इतोऽपि विसंज्ञावस्थायाम् एव आसीत्। सेवकाः आगत्य तं शय्यातः अधः पातितवन्तः। मन्त्रिणः तस्य मुखं पश्यन्तः- "एषः वा ! 'महाराजापेक्षया अहम् एव श्रेष्ठः' इति चिन्तयति स्म एषः। तदनुगुणं फलं प्राप्तवान्" इति सन्तोषेण उक्तवन्तः।

एतादृश्याम् अवस्थायां स्थितम् अजरुद्दीनम् दृष्ट्वा महाराजः क्षणकालं चकितः। तथापि सः किमपि अनुक्त्वा मौनं ततः बहिः गतवान्।

अपरस्मिन् दिने सूर्योदयतः पूर्वम् एव भटाः अजरुद्दीनं वध्यस्थानम् आनीतवन्तः। अजरुद्दीनस्य शूलारोपणं द्रष्टुं बहवः तत्र सम्मिलितवन्तः।

तदा जनानां मध्यतः कश्चन वृद्धः बहिः आगत्य- "अये पुत्र ! का गतिः प्राप्ता भवता ! जीवता मया भवतः एषा गति द्रष्टव्या वा ?" इति वदन् अजरुद्दीनम् आलिङ्ग्य रोदितुम् आरब्धवान्।

तत्समये दश मन्त्रिणः अपि तत्रैव आसन्। 'एषः वृद्धः एव प्रायः लुण्ठाकानां भूतपूर्वः नायकः इति ते चिन्तितवन्तः। प्रधानः मन्त्री तस्य बन्धनार्थम् आज्ञापितवान्। अनन्तरं धावन् महाराजस्य समीपं गत्वा वार्तां निवेदितवान् च। महाराजः कुतूहलेन वध्यस्थानम् आगतवान्।

महाराजं दृष्ट्वा वृद्धः चोरनायकः पादयोः

पतन् प्रार्थितवान्- "महाप्रभो ! मां मारयित्वा मम पुत्रं बन्धविमुक्तं करोतु । मम पुत्रः देवदूतः । दैवानुग्रहेण प्राप्तः वरप्रसादः एषः" इति ।

"सर्वे पितरः स्वपुत्रान् देवस्य वरप्रसादेन प्राप्तवान् एव मन्यन्ते किल भोः" इति उपहासपूर्वकम् उक्तवान् प्रधानः मन्त्री ।

"प्रभो ! एषः देवपुत्रः यदि न स्यात् तर्हि निर्मानुषमरुभूमौ शिलानां मध्ये कथं प्राप्तः भवेत् ? एषः अजरुद्दीनः मम औरसपुत्रः न । शैशवावस्थायां स्थितः एषः मरुभूमौ शिलानां मध्ये मया प्राप्तः" इति सगद्गदम् उक्तवान् वृद्धः चोरनायकः ।

"मरुभूमौ ! शिलानां मध्ये ! किं स्थलं तत् ? कदा प्राप्तः एषः ?" इति आश्चर्यः प्रकटयन् पूर्वतनं पुत्रवृत्तान्तं स्मरन् पृष्टवान् महाराजः ।

यदा चोरनायकः पूर्वतनं वृत्तान्तं सविस्तरं निवेदितवान् तदा महाराजस्य मनसि निश्चयः अभवत् यत् एषः अजरुद्दीनः आत्मनः पुत्रः एव इति । महाराजः आनन्दाश्रूणि मोचयन् अजरुद्दीनं गाढम् आलिङ्गितवान् । तदनन्तरं पुत्रेण सह वार्तालापसमये मन्त्रिणां कुतन्त्रं सः ज्ञातवान् ।

"एतान् दुष्टमन्त्रिणः सर्वान् पर्वतशिखरतः पातयन्तु" इति कोपावेशेन आदिष्टवान् महाराजः ।

"पितः ! तिष्ठतु । एते अकार्यं कृतवन्तः स्युः । किन्तु एतेन अस्माकं हितम् एव सिद्धं किल ? एतेन एव भवान् मम परिचयं प्राप्तवान् । अतः मरणदण्डनं न उचितम् इति भाति मम" इति उक्तवान् अजरुद्दीनः ।

"एवं तर्हि एतान् कारागारे स्थापयन्तु । आजीवम् एते कारागारसुखम् अनुभवन्तु" इति महाराजः आज्ञां कृतवान् ।

एतदनन्तरं पितापुत्रौ सम्भूय सुचारुरूपेण राज्यपालनं कुर्वन्तौ चिरकालं यावत् सुखेन जीवितवन्तौ ।





# मूकः तेमियः

(गतसञ्चिकायाः कथायाः उत्तरार्धम्)

महाराजः ज्योतिषिकान् आहूय पृष्टवान्- "भवन्तः पुत्रस्य जन्मकुण्डलीं दृष्ट्वा 'शुभलक्षणानि बहूनि सन्ति' इति उक्तवन्तः। कापि दुष्टग्रहपीडा नास्ति इत्यपि उक्तवन्तः। किन्तु वस्तुस्थितिः अन्या एव अस्ति किल? मम पुत्रः जन्मना मूकः, पङ्गुः, बधिरः, मन्दबुद्धिः च। भवतां वचनानि अक्षरशः वञ्चनापूर्णानि जातानि। शुभलक्षणानि कुत्र गतानि? किम् उत्तरं भवताम्?" इति।

"महाराज! बहोः कालात् अनन्तरं व्रतोपवासादीनां प्रभावेण भवान् पुत्रं प्राप्तवान्। पुत्रोत्सवस्य सन्तोषसन्दर्भे कथं वयं वदाम- भवतः पुत्रः अदृष्टहीनः इति? अतः एव तत्सन्दर्भे असत्यम् उक्तम्" इति उक्तवन्तः ज्योतिषिकाः।

"किं वा कुर्वन्ति भवन्तः। मम भाग्यम् एव तादृशम्। तदस्तु, इदानीं मया किं करणीयम्? निस्सङ्कोचं भवताम् अभिप्रायं वदन्तु' इति उक्तवान् महाराजः।

"प्रभो! एतस्य जीवनेन भवतः भवतः पत्न्याः वा राज्यस्य वा सुखं न भविष्यति। अतः दुर्लक्षणम् एतम् अशुभलक्षणयुक्तैः अश्वैः सहिते अशुभलक्षणोपेते रथे उपवेश्य पश्चिमद्वारेण श्मशानं नीत्वा गर्ते पातयन्तु। एतद्विना अन्यः योग्यः मार्गः नास्ति एव" इति उक्तवन्तः ज्योतिषिकाः।

आगमिष्यमाणेभ्यः अपायेभ्यः भीतः महाराजः तेषां वचनानि अनुसर्तुं निश्चितवान्। एतां वार्तां श्रुत्वा राज्ञी चन्द्रादेवी रुदती आगत्य उक्तवती- "प्रभो! पूर्वम् एकः वरः मह्यं दत्तः आसीत् किल? तत् अहम् इदानीं प्रष्टुम् इच्छामि" इति। महाराजः वरं प्रष्टुं सूचितवान्।

"एवं तर्हि मम पुत्रः राज्याभिषिक्तः भवेत्" इति प्रार्थितवती चन्द्रादेवी ।

"एतत् सर्वथा न शक्यम् । भवत्याः पुत्रः अनिष्टलक्षणोपेतः । सर्वं जानती अपि भवती एवं पृच्छति किल ! सः राज्याभिषेकार्थं सर्वथा अनर्हः" इति उक्तवान् महाराजः ।

तदा राज्ञी पुनः प्रार्थितवती- "एवं तर्हि सप्तवर्षाणि यावत् वा सः राजा यथा भवेत् तथा वरेण अनुगृह्णातु" इति ।

तदपि न अङ्गीकृतवान् महाराजः । अन्ते राज्ञ्याः अत्याग्रहेण सप्तदिनानि यावत् पुत्रं सिंहासने उपवेशयितुम् अङ्गीकृतवान् महाराजः ।

अतीव सन्तुष्टा चन्द्रादेवी तत्क्षणे एव गत्वा पुत्रं दिव्यवस्त्राभरणैः अलङ्कृतवती । नगरे सर्वत्र अलङ्कारार्थम् आज्ञापितवती । 'श्वः आरभ्य तेमियः राजशासनं करिष्यति' इति वार्ता सडिण्डिमघोषं सर्वत्र प्रसारिता । 'किमिदं विचित्रं वैभवम् !' इति उद्गारं प्रकटितवन्तः पुरजनाः ।

तद्दिने रात्रौ चन्द्रादेवी पुत्रस्य पार्श्वे उपविश्य- "तात ! भवदर्थम् अहं षोडशवर्षाणि यावत् अहोरात्रं जागरूका आसम् । भवतः अवस्थां स्मरन्ती अहं यत् रोदनं कृतवती तत् सीमातीतम् । भवान् एतत्सर्वं दृष्टवान् एव । भवति किमपि अवलक्षणं नास्ति इति अहं



जानामि । मत्कृते वा भवान् किञ्चित् क्रियाशीलः भवतु । पादयोः पतन्ती प्रार्थयामि" इति सगद्गदम् उक्तवती । किन्तु तेमियः यथापूर्वं निश्चलः स्थितप्रज्ञः इव आसीत् ।

एवम् एव षट् दिनानि अतीतानि । राजा स्वसारथिं सुनन्दम् आहूय आज्ञापितवान्- "अशुभलक्षणैः युक्तैः अश्वैः सहितः अशुभलक्षणोपेतः रथः श्वः सिद्धः भवतु । तत्र तेमियम् उपवेश्य पश्चिमद्वारेण श्मशानं नयतु । तत्र महागर्तं निर्माय गर्ते तेमियं शाययित्वा गर्तं मृत्तिकया पूरयतु । गर्तस्थानम् अन्ये यथा न जानीयुः तथा व्यवस्थां कृत्वा स्नानं कृत्वा भवान् प्रत्यागच्छतु" इति ।

सप्तमे दिने रात्रौ चन्द्रादेवी पुत्रम्




आलिङ्ग्य- "पुत्र ! भवतः मरणार्थम् महाराजेन आज्ञा कृता अस्ति । असमये भवतः मरणं दृष्ट्वा किम् अहं जीवेयम् ?" इति रोदनं कृतवती ।

एतत् वचनं श्रुत्वा तेमियः सन्तुष्टः । 'षोडषवर्षपर्यन्तं यत् कठिनव्रतम् आचरितं तत् सिध्यति । श्वः अहम् एतस्मात् लोकतः स्वतन्त्रः भविष्यामि" इति । सगद्गदं रुदतीं मातरं दृष्ट्वा अपि निर्लक्ष्यतया उपविष्टवान् ।

अपरस्मिन् दिने प्रातः सारथिः सुनन्दः अवलक्षणोपेतं रथम् अन्तःपुरस्य प्राङ्गणे आनीय महाराज्ञीं सविनयं निवेदितवान्- "तत्रभवती राजाज्ञां जानाति एव । मया राजाज्ञा परिपालनीया" इति ।

चन्द्रादेवी पुत्रम् आलिङ्ग्य पुनरपि रोदनं कृतवती । सारथिः तेमियं तस्याः आलिङ्गनतः कथञ्चित् उन्मोच्य बहिः आनीय रथे उपवेशितवान् । 'पश्चिमदिशि गन्तव्यम्' इति चिन्तयन् पूर्वदिशः मार्गम् अनुसृतवान् च । मार्गपरिवर्तनं सः न ज्ञातवान् एव ।

अश्वाः योजनत्रयपर्यन्तं कुत्रापि न स्थितवन्तः । अरण्ये श्रान्त्या यदा अश्वाः स्थिताः तदा सुनन्दः परितः दृष्टवान् । भ्रान्त्या तत् वनं रुद्रभूमिम् इव चिन्तयन् सः रथात् अवतीर्य गर्तखननार्थम् उद्युक्तः अभवत् ।

"षोडषवर्षाणाम् अनन्तरं अङ्गाङ्गचालनार्थम् अवकाशः प्राप्तः' इति चिन्तयित्वा तेमियः मन्दं रथात् अवतीर्णः । हस्तेन पादौ मर्दयित्वा दशपदानि इतस्ततः सञ्चारं कृतवान् । आत्मनः सामर्थ्यं परीक्षितुम् इच्छन् हस्तेन रथम् उन्नीतवान् । तृप्त्या हसन् स्थापितवान् च ।

अनन्तरं गर्तखनने निरतस्य सुनन्दस्य समीपं गत्वा पृष्टवान्- "एतावत्या श्रद्धया गर्तं खनन् अस्ति किल । किमर्थम् ?" इति।

'कश्चित् पथिकः पृच्छति' इति चिन्तयन् सुनन्दः गर्तं खनन् एव उपरि अपश्यन् उक्तवान्- "अस्माकं महाराजस्य पुत्रः विकलाङ्गः बधिरः मूकः मन्दबुद्धिः च । अप्रयोजकम् एतं गर्ते स्थापयित्वा तदुपरि मृत्तिकां संस्थाप्य आगच्छतु इति महाराजः आज्ञां कृतवान्

अस्ति। तदर्थम् एषः गर्तः" इति।

"अये ! मां सम्यक् पश्यतु। अहं न विकलाङ्गः, न बधिरः, न वा मूकः। मां यदि गर्ते स्थापयति तर्हि भवान् पापेन लिप्तः भविष्यति। महाराजस्तु मम मरणम् इच्छति किल ? तदर्थम् एतावान् प्रयासः किमर्थम् ?" इति पृष्टवान् बोधिसत्त्वः तेमियः।

सारथिः बोधिसत्त्वम् आश्चर्येण पश्यन् पृष्टवान्- "कः भवान् ? किं नाम भवतः ? पितुः नाम किम् ?" इति।



बोधिसत्त्वः निजवृत्तान्तम् उक्तवान्। किन्तु तदीयवचनेषु सुनन्दस्य विश्वासः एव नास्ति। सः इतस्ततः गत्वा राजकुमारः अन्यत्र स्यात् इति परीक्षितवान्। अनन्तरं बोधिसत्त्वस्य पादयोः प्रणम्य- "महाराज ! एवं चेत् अरण्यं किमर्थम् आगन्तव्यम् आसीत् ? गच्छतु राजधानीम्। सुखेन राज्यभारं करोतु" इति उक्तवान्।

"मूर्ख ! अद्य मया पुनर्जन्म प्राप्तम् इव। अत्र एव मम सन्तोषः, न तु राज्यपालने। अद्य आरभ्य अहं स्वतन्त्रः" इति उक्तवान् बोधिसत्त्वः।

"महाराज ! एतावत्पर्यन्तम् किमर्थम् भवान् मूकः इव बधिरः इव विकलाङ्गः इव आचरितवान् ?" इति पृष्टवान् सुनन्दः।

"पूर्वम् अहम् अपि महाराजः आसम्। तत्कारणतः घोरः नरकवासः अनुभूतः अपि। 'पुनः राज्यपदं निर्वोढव्यम्' इति भीत्या एव अहं मूकः सञ्जातः। यदा अहं शिशुः आसं तदा मम पिता मम पुरतः चतुर्णां मरण-दण्डनार्थम् आज्ञां कृतवान्। तद्दिनतः अहं बधिरः इव जातः। मातापित्रोः व्यामोहतः दूरं स्थातुम् अहं विकलाङ्गः इव आचरितवान्। 'क्षणभङ्गुरं जीवनं दुःखमयं इति जानन् को वा अन्यस्य दण्डनं सहेत ? अन्यदण्डने मानवस्य कः अधिकारः ? एतादृशम् अल्पं सत्यांशम् अजानन्तः जनाः अज्ञानान्धकारेण व्यामुग्धाः सन्तः संसारक्लेशम् अनुभवन्ति" इति उक्तवान् बोधिसत्त्वः।

एतेन उपदेशात्मकवचनेन सुनन्दे अपि वैराग्यभावः उत्पन्नः। सः- "भवतः उपदेशं



श्रृण्वन् अहम् अपि अत्रैव स्थास्यामि'' इति उक्तवान्।

''एतत् न उचितम्। एषः रथः महाराजस्य। प्रथमम् एतं प्रत्यर्पयतु। अनन्तरं कौटुम्बिकजीवनतः विमुक्तिं प्राप्य संन्यासमार्गस्य आश्रयणं करोतु। तावत्पर्यन्तं भवान् न स्वतन्त्रः'' इति बोधितवान् बोधिसत्त्वः।

तदा सुनन्दः उक्तवान्- ''श्रीमन्! मम प्रत्यागमनपर्यन्तम् अपि अत्रैव स्थास्यामि इति वचनं ददातु। मया सह महाराजम् अपि आनेष्यामि। सोऽपि भवन्तं दृष्ट्वा सन्तुष्टः भविष्यति'' इति।

बोधिसत्त्वः 'भवतः प्रत्यागमनपर्यन्तम् अत्रैव स्थास्यामि' इति वचनं दत्तवान्। सुनन्दः तं पुनरपि प्रणम्य राजधानीं प्रतिगतवान्।

कुमाररहितं रिक्तं रथं गवाक्षतः दृष्ट्वा चन्द्रादेवी उच्चैः रोदनम् आरब्धवती। सारथिं स्वसमीपम् आहूय पृष्टवती च- ''किं भोः, मम पुत्रः अन्तिमक्षणे वा किमपि उक्तवान् वा? मरणसमये वेदनया हस्तपादान् न चालितवान् वा?'' इति।

''भवती पुत्रविषये यथा चिन्तयति, तथा नास्ति सः। राजपदवीतः भीतः सः तथा नटनं कृतवान्। वस्तुतः किं तस्य कण्ठमाधुर्यम्! अहो! कीदृशी बुद्धिमत्ता! सामान्यजीवनेन अतृप्तः सः दिव्यमार्गम् अनुसरति। किमधिकं वदामि? भवती एव स्वयं पश्यतु'' इति वदन् अरण्ये प्रवृत्तं समग्रं चन्द्रादेव्यै निवेदितवान्। एतत् श्रुतवत्याः चन्द्रादेव्याः दुःखाश्रूणि आनन्दाश्रुरूपेण परिवृत्तानि। सा त्वरया गत्वा महाराजाय एतं वृत्तान्तं निवेदितवती।

पुत्रस्य वार्तां श्रुत्वा महाराजः परिवारेण सह पुत्रदर्शनार्थम् अरण्यं प्रति प्रस्थितः एव। यावत् ते बोधिसत्त्वस्य समीपं न आगतवन्तः ततः पूर्वम् एव इन्द्रः विश्वकर्मद्वारा बोधिसत्त्वस्य वसत्यर्थं पर्णकुटीरं निर्माय दत्तवान्।

सपरिवारः महाराजः पर्णशालां प्राप्तवान्। बोधिसत्त्वः पितुः कृते आसनं स्थापितवान्। किन्तु महाराजः पुत्रविषयकगौरवेण भूमौ एव

उपविश्य उक्तवान्- "किम् एतत् पर्णकुटीरे वासः? किम् एतत् भवतः कठिनभूमौ शयनम्? भवान् महाराजस्य पुत्रः। भवदर्थं प्रासादाः सिद्धाः सन्ति। दासाः दास्यः च भवतः सेवार्थं कटिबद्धाः सन्ति। भवान् राजधानीम् आगत्य सुखेन जीवतु" इति।

"तात! भवता यानि सुखसाधनानि उक्तानि तानि अशाश्वतानि। तैः सह मम कोऽपि सम्बन्धः नास्ति। वयं सर्वदा राज्यं सिंहासनं सुखं वैभवम् इति चिन्तयन्तः तिष्ठामः। किन्तु गतित्रयम् अस्मान् न मुञ्चति। एकं तु वार्धक्यं यच्च प्रतिदिनम् अस्मान् भक्षयति। अपरः कालः यच्च अन्यस्य प्रतीक्षाम् अकुर्वन् स्वीयकार्ये निरतः भवति। तृतीयः च मृत्युः यश्च समये प्राप्ते अस्माकम् उपरि अकस्मात् आक्रमणं करोति। एतान् सर्वान् वयं न परिगणयामः एव" इति।

"भवतः वचनानि श्रृण्वतः मम जीविते जुगुप्सा उत्पद्यते। मम राज्यं मास्तु। अहं अरण्ये तपः आचरामि। भवान् राज्यपरिपालनं करोतु" इति अनुरोधपूर्वकम् उक्तवान् महाराजः।

"सर्वसङ्गपरित्यागिनः मम भवतः राज्येन किं प्रयोजनम्?" इति महाराजं वदन् बोधिसत्त्वः तत्र सम्मिलितान् उद्दिश्य जीवितपरमार्थविषये बोधयितुम् आरब्धवान्। तस्य उपदेशवचनानि श्रोतुं जनाः समूहरूपेण आगतवन्तः। तत्र ये उपस्थिताः ते सर्वे कालान्तरे विरागिणः जाताः।

काशीराजस्य संन्यासवार्तां श्रुत्वा अन्योऽपि महाराजः बोधिसत्त्वं शरणं गतवान्। वैराग्यभावेन आक्रान्तः सः स्वनागरिकैः सह संन्यासधर्मम् आश्रितवान्। अन्यः कश्चित् राजा अपि एवम् एव संन्यासमार्गम् आश्रितवान्। एवं राज्यत्रयं वसतिशून्यम् अभवत्। त्रिषु अपि राज्येषु इदानीं अमूल्यानि रत्नानि भोगसाधनानि च पाषाणखण्डस्य मूल्यताम् अपि न अर्हन्ति स्म।





# राजसत्कारः

रामपुरे गोविन्दः नाम युवकः निवसति स्म। तस्य बुद्धिः तीक्ष्णा, किन्तु शरीरेण सः अतीव दुर्बलः। ग्रामजीवने शारीरकश्रमस्य एव प्राधान्यं किल ? अतः जनाः गोविन्दं निष्प्रयोजकं चिन्तयन्ति स्म। अग्रजः भ्रातृजाया च मातापितृविहीनस्य गोविन्दस्य असामर्थ्यं प्रतिदिनं निन्दतः।

गोविन्दः स्वमत्यनुगुणं काले काले जनेभ्यः उचिताः संसूचनाः ददाति स्म। एतेन जनाः प्रयोजनं प्राप्नुवन्ति स्म। एवम् उपकृताः गोविन्दस्य अग्रजं वदन्ति स्म- ''भवतः अनुजः महाबुद्धिमान्'' इति।

ग्रामीणैः क्रियमाणां गोविन्दस्य स्तुतिं पुनः पुनः श्रुतवतः अग्रजस्य मनसि असमाधानम् उत्पन्नम्। एकदा सः वार्तालापमध्ये पत्नीं पृष्टवान्- ''गोविन्दः यदि वस्तुतः बुद्धिमान् स्यात् तर्हि किमर्थं वा राजसभां न गच्छेत् ?''इति।

तदा गोविन्दस्य भ्रातृजाया उक्तवती- ''यदि योग्यता स्यात् तर्हि गन्तुं शक्नुयात्। योग्यता अस्ति इत्यत्र कः विश्वासः ?'' इति।

अग्रज-भ्रातृजाययोः सम्भाषणं गोविन्दः अकस्मात् श्रुतवान्। एतेन सः अतीव खिन्नः। तेनैव सह 'किमर्थं वा राजधानीं गत्वा अदृष्टपरीक्षा न करणीया ?' इति भावना अपि उत्पन्ना तस्य मनसि।

युगादिमहोत्सवः समीपम् आगतः आसीत्। तद्दिने महाराजः विजयपालः उत्सवाचरणे स्वयं पुरजनैः सह सम्मिलति। तथैव राजसभायां पुरजनान् प्रश्नान् पृच्छति। तदनन्तरं पुरस्कारान् ददाति अपि।

युगादेः पूर्वदिने गोविन्दः राजधानीं प्राप्तवान्। अनन्तरदिने सम्यक् सिद्धः सन् उत्सवमण्डपं प्रविष्टवान् च। प्रश्नोत्तरकार्यक्रमे

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकटिता कथा''



भागग्रहीतारः एकत्र पीठे उपविष्टाः आसन्। गोविन्दः तेषां मध्ये उपविष्टवान्।

राजा विजयपालः राजसभां प्रविष्टवान्। प्रश्नोत्तरकार्यक्रमः आरब्धः। राजा पृष्टवान्- "मम राज्ये सत्यवादिनः कति सन्ति ?" इति।

"लक्षजनाः स्युः" इति उक्तवान् एकः।

अन्यः उक्तवान्- "प्रतिशतं दशजनाः सत्यवादिनः" इति।

तदा गोविन्दः उक्तवान्- "भवदधीनाः पञ्चशतं जनाः अपि सत्यवादिनः एव" इति।

"कथम् एवं विश्वासपूर्वकं वदति ? किम् अत्र प्रमाणम् ?" इति पृष्टवान् महाराजः।

"प्रभो ! सत्यनिष्ठस्य भवतः अधीने ये कार्यं कुर्वन्ति ते अपि सत्यनिष्ठाः भवेयुः एव। अन्यथा भवान् तान् उद्योगतः निस्कासयति किल ?" इति उक्तवान् गोविन्दः।

"पत्नी किमर्थं पत्युः प्रियम् एव आचरति ?" इति द्वितीयप्रश्नं पृष्टवान् महाराजः।

"भीत्या" इति केचन उक्तवन्तः। अन्ये केचन "स्वजीविकार्थं" इति उक्तवन्तः। तदा गोविन्दः उक्तवान्- "पत्नी पत्युः प्रियम् एव आचरति इति न। सा यत् करोति तत् एतस्य प्रियतरं भवति, तावदेव" इति।

एतेन उत्तरेण हसन् महाराजः उक्तवान्- "अस्तु, इदानीं भवन्तः विश्वसितुम् अशक्यम् असत्यं वदन्तु" इति।

"अहम् आकाशे सञ्चारं कृतवान्" इति उक्तवान् एकः। "मम पादः शतधा छिन्नः अपि पुनः संलग्नः" इति उक्तवान् अन्यः।

"महाराज ! अत्र सभायाम् उपस्थिताः सर्वे महिषाः" इति उक्तवान् गोविन्दः।

एवं किञ्चित्कालपर्यन्तं विनोदपूर्णं प्रश्नोत्तरं प्रचलत् आसीत्। अन्ते राजा सर्वेभ्यः पुरस्कारान् दत्तवान्। गोविन्दः अपि पुरस्कारं प्राप्तवान्। किन्तु तस्य पुरस्कारः न उल्लेखार्हः। इतरैः इव तेन अपि सताम्बूलं वस्त्रम्, एकं सुवर्णनाणकं च प्राप्तम् आसीत्।

विजयपालः पूर्वपरम्परानुगुणं भोजनकूटस्य-

अपि व्यवस्थां कृतवान् आसीत्। तदर्थं गोविन्दः अपि निमन्त्रणं प्राप्तवान्।

सभाविसर्जनानन्तरं पुरस्कारत्वेन प्राप्तं वस्त्रं गोविन्दः अन्यस्मै दत्तवान्। सामान्यवेषेण एव भोजनपंक्तौ उपविष्टवान्। अन्ये सर्वे महाराजेन दत्तानि वस्त्राणि धृत्वा उपविष्टवन्तः आसन्। भोजनसन्दर्भे अपि गोविन्दः भक्ष्यादिकं किमपि न स्वीकृतवान्।

गोविन्दस्य एषः विचित्रव्यवहारः महाराजेन ज्ञातः। सः गोविन्दं स्वसमीपम् आहूय पृष्टवान्- "अस्माभिः दत्तानि नूतनवस्त्राणि भवान् न धृतवान्। भोजने अपि मिष्टान्नं किमपि न खादितवान्। किं भवान् राजसम्माननस्य अवमाननं कर्तुम् इच्छति?" इति।

तदा गोविन्दः उक्तवान्- "महाराज! अहं कश्चन निर्धनः। यदि अद्य भवता दत्तं कौशेयवस्त्रं धरामि तर्हि श्वः आरभ्य सामान्यवस्त्राणि धर्तुं मम इच्छा न भविष्यति। अतः अहं तत् कौशेयवस्त्रं दानरूपेण दत्तवान्। भोजनविषये अपि एवम् एव। अन्नं सारः तक्रं च मम भोजनम्। यदि मिष्टान्नस्य अभ्यासः भवेत् तर्हि जिह्वा प्रतिदिनम् अपि विशेषभोजनम् अभिलषति। तदा जिह्वाचापल्यस्य निवारणार्थम् वञ्चनादिकं करणीयम् भवेत्। अतः मम योग्यतानुगुणं भोजनं कृतवान्। राजसम्माननस्य अवमाननं करणीयम् इति दुर्बुद्धिः मम नास्ति एव। भवान् अन्यथा मा चिन्तयतु" इति।

"मया यत् सुवर्णनाणकं दत्तं तदपि अन्यस्मै दानरूपेण दत्तवान् वा?" इति पृष्टवान् राजा विजयपालः।

"न, महाप्रभो! मम अग्रजः मां पुत्रवत् पालयति। तस्मै तत् सुवर्णनाणकं दातुम् इच्छामि। तदर्थं तत् नाणकं मत्समीपे स्थापितवान्" इति उक्तवान् गोविन्दः।

गोविन्दस्य सद्बुद्धिं विवेकशीलतां च दृष्ट्वा महाराजः गोविन्दस्य यथेष्टं धनं दत्त्वा तं राजसभायां योग्यपदव्यां नियोजितवान्।



# राकून् प्राणिनः

उत्तर-अमेरिकाप्रदेशे निवसतां राकून् प्राणिनाम् आहारान्वेषणपद्धतिः विचित्रा। भल्लूक-जातीयाः एते राकून् प्राणिनः सायङ्काले अन्धकारस्य प्रसारस्य आरम्भः यदा भवति तदा आहारान्वेषणार्थं निर्गच्छन्ति। लघुपक्षिणः, तेषाम् अण्डानि, मूषकान् मण्डूकान् च गृहीत्वा खादन्ति। अरण्ये आहारः यदि न लभ्येत तर्हि समीपस्थानां ग्रामाणां कुक्कुटवसतेः उपरि आक्रमणं कुर्वन्ति। तत्सन्दर्भे अल्पः शब्दः उत्पन्नः चेदपि भीत्या वृक्षशाखासु निलीनाः भवन्ति।

एतेषां प्राणिनां पादाः अल्पाकारकाः। अङ्गुलीनां मध्ये चर्मपटलं नास्ति। तथापि एते अतिवेगेन तरणं कर्तुं समर्थाः। नदीजले निमज्जनं कृत्वा अग्रिमपादद्वयेन मीनान् गृहीत्वा उपरि आगच्छन्ति। सर्वविधान् आहारान्–मीनान् अपि–जलेन प्रक्षाल्य एव खादन्ति इत्येतत् एतेषां वैशिष्ट्यम्।

पुच्छसहितम् एतेषां दैर्घ्यम् एकमीटरात्मकम्। पूर्वम् एतेषां सङ्ख्या पर्याप्तमात्रेण आसीत्। एषु दिनेषु ऊर्णवस्त्राणां निर्माणे एतेषां प्राणिनां चर्म विशेषतया उपयुक्तम् इति कारणतः सङ्ख्या गणनीयप्रमाणेन क्षीणा जाता। गतशतक-पर्यन्तम् अपि वनवासिनः विनिमयसाधनरूपेण एतेषां राकून् प्राणिनां चर्मणाम् एव उपयोगं कुर्वन्ति स्म, न तु धनस्य।

सामान्यतः एते प्राणिनः वृक्षस्य शाखासु निवसन्ति। तथापि कदाचित् भूमौ इतरप्राणिभिः निर्मितेषु बिलेषु निवसन्ति। शैत्यकाले एते प्राणिनः समीचीनं स्थलम् अन्विष्य गाढं निद्रां कुर्वन्ति। शैत्यकालस्य अन्ते यदा वातावरणे क्रमशः उष्णता वर्धते तदा जागरूकाः सन्तः बाह्यप्रपञ्चं प्रविशन्ति।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | | | |
|---|---|---|---|
| अनामिकः - | Unknown | चिटिका - | Letter |
| अन्तरार्थः - | Inner meaning | चुल्ली - | Oven |
| उड्डयनम् - | Flying | नागदन्तिका - | Hanger |
| उलूकः - | Owl | निमन्त्रणम् - | Invitation |
| ऊर्णवस्त्रम् - | Woollen cloth | पङ्गुः - | Lame |
| कङ्कणः - | Bangle | प्रतिशतम् - | Per cent |
| कदलीगुम्फः - | Bunch of Bananas | प्रातिवेशिकः - | Neighbour |
| कर्मकरी - | Woman worker | बकः - | Crane |
| काचकम् - | Glass | बधिरः - | Deaf |
| किंवदन्ती - | Rumour | भल्लूकः - | Bear |
| कुक्कुटः - | Cock | मण्डूकः - | Frog |
| कौमुदी - | Moonlight | मधुबिन्दुः - | A drop of honey |
| कौशेयवस्त्रम् - | Silk cloth | यवागूः - | Rice gruel |
| खुरः - | Hoof | लवित्रम् - | Sickle |
| गोणी - | Gunny bag | वाटिका - | Kitchen garden |
| गोष्ठः - | Cattle shed | विदारयितुम् - | To split |
| चकोरः - | A bird (Partridge) | विसंज्ञः - | Unconscious |
| चन्दनम् - | Sandal paste | संसूचनाः - | Suggestion |



# चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

### विजितां शीर्षिकां मार्च-८६ मासे प्रकटयिष्यामः।





❀ उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः-

**चन्दमामा (संस्कृतम्)**

७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम् बेङ्गलूरु-५६०००४

---

### 'नवम्बर' मासस्य चित्रशीर्षिकास्पर्धाया परिणामः-

प्रथमचित्रम्- असि त्वम् अश्वारूढा किम्?

द्वितीयचित्रम्- विश्वस्य उपरि आरूढः अहम्।

प्रेषकः- नरेन्द्र. वि. घाठे, बि-६, "जीवनबहार", तृतीयः मार्गः, चेम्बूरुनगरम् मुम्बई-७१

---

# भवन्तः जानन्ति वा? (उत्तराणि)

१. रविः उदयशङ्कर च २. वीणावादने ३. उस्ताद् बिस्मिल्लाखान्

४. घजल्गीतैः ५. एम्. एस्. सुब्बुलक्ष्मीः

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# उदरवेदना

| | |
|---|---|
| रोगी- वैद्यमहोदय !महती उदरवेदना । | I have a severe stomach ache, doctor. |
| वैद्यः- उपविशतु, कदा आरभ्य ? | Sit down. From when are you having the trouble? |
| रो- दिनद्वयतः । | For the last two days. |
| वै- जिह्वां प्रदर्शयतु । नेत्रे विशालम् उद्घाटयतु । वेदना निरन्तरं तिष्ठति वा? | Stretch your tongue, open your eyes well. Do you have it throughout? |
| रो- न, तदा तदा वेदना अधिका भवति . . । | No, sometimes it is more severe. |
| वै- आहारे किमपि परिवर्तनम् आसीत् वा ? | Did you have any change of food? |
| रो- नास्ति श्रीमन्, सामान्यः एव आहारः । | No sir, I had my usual simple food. |
| वै- इतःपूर्वम् उदरवेदना आसीत् वा ? | Did you suffer from stomach ache before? |
| रो- पञ्चवर्षेभ्यः पूर्वम् आसीत्, अनन्तरं कदापि एतादृशी वेदना न अनुभूता । | I had it five years ago, but I never suffered like this any time subsequently. |
| वै- तदानीं कः औषधोपचारः कृतः ? | What treatment did you take then? |
| रो- ग्रामवैद्यः एव किमपि औषधं दत्तवान् । | The village doctor had treated me then. |
| वै- अस्तु, इदानीम् गुलिकाः ददामि । तेन वेदना न्यूना भविष्यति । किन्तु भवता एकवारम् एक्सरे-चित्रं कारणीयम् । | Okay, I'll give you some tablets now. Pain will get reduced. But you will have to have an x-ray once. |
| रो- किम् ? एक्सरे ! उदरे किमपि . . . ? | What? x-ray! Any problem....? |
| वै- तथा किमपि नास्ति, तथापि जागरूकता-दृष्ट्या मया तथा सूचितम् । | Nothing, but better we go in for it for reasons of caution. |
| रो- पुनः कदा आगन्तव्यम् ? | When should I see you again? |
| वै- दिनत्रयानन्तरम् एकवारम् आगत्य प्रदर्शयतु । एताः गुलिकाः स्वीकरोतु । प्रातः मध्याह्ने सायं च एकैकां स्वीकरोतु । कटु-आहारः सर्वथा निषिद्धः । तक्रान्नं स्वीकर्तुं शक्यते । | Come back after three days. Take these tablets, thrice daily, morning, afternoon and evening. Avoid taking hot food. You can have curd rice. |

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता




# चन्दमामायां

चन्दमामायाः लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् एतां १,२०,००,००० बालकाः पठन्ति ।

चन्दमामायाः प्रसारसङ्ख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्व-एशियादेशानां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

प्रत्येकमासस्य कथासु दर्शितम् अस्ति ।

भारतस्य सर्वाधिकप्रसारयुता बालानां मासिकी ।